[1]स पूर्वाह्णे निवास्य पात्रचीवरमादाय पाटलिपुत्रं पिण्डाय प्रविष्टः[3]। सोऽनभिज्ञया[2] च रमणीयकं भवनं[4] प्रविष्टः। तच्च[5] द्वारमात्ररमणीयमभ्यन्तरं नरकभवनसदृशं प्रतिभयं[6] दृष्ट्वा च पुनर्निर्गन्तुकामश्चण्डगिरिकेणावलोकितः[7]। गृहीत्वा चोक्तः। इह ते निधनमुपसंगन्तव्यमिति। [8]विस्तरेण कार्यं[9]।

ततो भिक्षुः शोकार्तो वाष्पकण्ठः[10] संवृत्तः। तेनोच्यते। किमिदं बालदारक इव रुदसीति[11]। स भिक्षुः प्राह।

न शरीरविनाशं हि भद्र[12] शोचामि सर्वशः।<br>
[13]मोक्षधर्मान्तरायं तु शोचामि भृशमात्मनः॥<br>
दुर्लभं प्राप्य मानुष्यं प्रव्रज्यां च सुखोदयां।<br>
शाक्यसिंहं च शास्तारं पुनस्त्यक्ष्यामि दुर्मतिः॥

तेनोच्यते। दत्तवरोऽहं नृपतिना। धीरो भव। नास्ति ते मोक्ष इति। ततः सकरुणैर्वचनैस्तं भिक्षुः क्रमं याचति स्म। मासं यावत्। सप्तरात्रमनुज्ञातः[14]।

[15]स खलु मरणभयोद्विग्नहृदयः सप्तरात्रेण मे न भवितव्यमिति व्यायतमतिः संवृत्तः[16]।

अथ सप्तमे दिवसे[17] अशोकस्य राज्ञोऽन्तःपुरिकां[18] कुमारेण सह संरक्तां निरीक्ष्यमाणां[19] संलपन्तीं च दृष्ट्वा [20]सहदर्शनादेव[21] रुपितेन

---

[1-2]Chl omits. [3]Chl adds: *nagarasya*. [4]Chl "prison". [5]Chl reads: "and pronounced these words: *dvāramātra*°". [6-7]Chl "Then he wished to get out, but Girika did not allow him to do so." [8-9]Chl "You must no more dream of going out." [10]Div. °*ṇṭha-saṃ*°. [11]=*rodiṣiti*. [12]Div. omits. [13-14]Chl "'This is for the fear of losing the benefit of my good actions; for, I left the world and have not yet witnessed the Law and the Way. A human body is difficult to attain. The Law of Buddha is difficult to meet with. It is for this I shed tears.' Girika said: 'Formerly, the king authorised me to nevermore allow (anybody) to get out of this and put to death anybody who enters into this enclosure.' The Bhikṣu said: 'Allow me to live for seven days; after that if you like to kill me, I shall consent.' Girika granted this." [15-17]Chl omits. [16]Div. °*mati saṃ*°. [18]Div. °*kā*. [19]ABCE °*kṣamā*°. Chl omits it.

राज्ञा तौ द्वावपि तं [1]चारकमनुप्रेषितौ। [2]तत्र मूशलैरयोद्रोण्या-मस्थ्यवशेषौ कृतौ। ततो भिक्षुस्तौ दृष्ट्वा संविग्नः प्राह[3]।

अहो कारुणिकः शास्ता सम्यगाह महामुनिः।
फेनपिण्डोपमं रूपमसारमनवस्थितं[4]॥
क्व तद् वदनकान्तित्वं गात्रशोभा क्व सा गता।
धिगस्त्व[5]न्यायसंसारं रमन्ते यत्र बालिशाः॥
[6]इदमालम्बनं प्राप्तं चारके वसता मया।
यदाश्रित्य तरिष्यामि पारमद्य भवोदधेः[7]॥
तेन तां रजनीं कृत्स्नां युज्यता[8] बुद्धशासने[9]।
सर्वसंयोजनं छित्वा प्राप्तमर्हत्त्वमुत्तमं[10]॥

ततस्तस्मिन् रजनिक्षये[11] स भिक्षुश्चण्डगिरिकेणोच्यते। [12]भिक्षो निर्गता रात्रिर् उदित आदित्यः[13] कारणाकालस्तवेति। ततो भिक्षुराह। दीर्घायु[14]र्ममापि निर्गता रात्रिर् उदित आदित्यः परानु-ग्रहकाल इति। यथेष्टं वर्ततामिति[15]।

[16]चण्डगिरिकः प्राह। नावगच्छामि विस्तीर्यतां वचनमेत-दिति[17]। ततो भिक्षुराह।

---

[1]Chl adds: *ramaṇiyakaṁ*. [2–3]Chl "Girika pounded them immediately, striking the heads with a rammer, in such a way that the eye-balls burst out. At such a sight, the Bhikṣu was seized with horror and he said to himself..." [4]Chl adds: "If (*rūpa*) festers quickly, without allowing us (even) the time for breathing...". [5]BCDE °*nāyaṁ saṁsāro* (E °*re*), A *dhig astu ayaṁ saṁsāro*. Chl *aho saṁsāre'smin bāliśā ramante*. [6–7]Chl "The Holy Law is not there (in *saṁsāra*). I have been able to discriminate it in this sojourn. I will not sink in the ocean of 'being (*bhava*)'." [7]Div. *yam āśritya tariṣyāmi*°. [8]Div. *kṛtsnā yu*-. [8–9]Chl "passed in contemplation". [9–10]Chl "He broke all the bonds so that he could realise the Fruit of *srotāpatti* and constantly through his efforts towards perfection.... he attained to Arhathood." [11]Chl "seven days having passsed". [12–13]Chl "Seven days have passsed. The eighth day is going to dawn." [14]Chl omits it. [15]Chl *lit.* "Force me to die, if you wish." [16–17]Chl "Girika asked, 'What do you mean by that: My night is past, my Sun has arisen, the hour of the supreme success is come.'"

[1]ममापि हृदयाद् घोरा निर्गता मोहशर्वरी ।
पञ्चावरणसंच्छन्ना क्लेशतस्करसेविता ॥
उदितो ज्ञानसूर्यश्च मनोनभसि मे शुभः ।
प्रभया यस्य पश्यामि त्रैलोक्यमिह तत्त्वतः ॥
परानुग्रहकालो मे शास्तुर्वृत्तानुवर्तिनः ।
इदं शरीरं दीर्घायुर्यथेष्टं क्रियतामिति[2] ॥

ततस्तेन निर्वृणेन दारुणहृदयेन परलोकनिरपेक्षेण रोपाविष्टेन[3] [4] कायां स्थाल्यां नररुधिरवसामूत्रपूरीपसंकुलायां महालोह्यां प्रक्षिप्तः। प्रभूतेन्धनैश्चाग्निः प्रज्वालितः। स च वहुनापीन्धनक्षयेण न संतप्यते। ततः[4] पुनः[5] प्रज्वालयितुं चेष्टते[6]। यदा तस्यापि न प्रज्वलति[7] ततो विचार्य तां लोहीं[8] पश्यति। तं भिक्षुं [8]पद्मस्योपरि पर्यङ्केणोपविष्टं दृष्ट्वा च ततो[9] राज्ञे निवेदयामास[10]। अथ राजनि समागते[11] प्राणिसहस्रेषु संनिपतितेषु स भिक्षुर्वैनेयकालमवेक्षमाणः

---

[1–2]Chl "I was in the dark night of ignorance. I have completely destroyed for ever, the rebels which were bonds (*saṁyojana*). That is what signifies 'my night is past.' My spirit cleansed by wisdom (*prajñā*) sees the three worlds clearly. That is what signifies 'my sun has arisen.' Behold, I have completely realized that which Buddha has done. That is what signifies 'the hour of supreme success is come.' May you live long and chastise me as you like." [2]Div. *idaṁ śarīradīrghāyur*. [2–3]Chl *lit.* "Girika, by his cruelty, tortured the innocents. As he did not believe in the life beyond death, his anger became double." [3]Div. *°pekṣaṇaroṣā°*. [5]Div. omits. [6]CD *°lita*. [4–7]Chl "Thereafter, Girika was angry with those who had lighted the fire and struck them with a stick. He lighted the fire again with his own hand. The fuels without heating further were entirely consumed. Besides, he put fire to the pieces of wood-work, the thatch (?) and the woolen stuff in abundance; he burnt them entirely, but the water remained cold as before. He asked himself in astonishment, why it was so, and looked into the vessel." [8]Chl adds: *sahasradala*. [9]Chl adds: *bhītabhīta*. [10]Chl adds: "The king came and in order to enter inside got the wall demolished. All the inhabitants followed the king; and they gazed at the Bhikṣu, by thousand, by *koṭi*, by myriads." [10–11]Chl omits.

[1]ऋद्धिं समुत्पाद्य स तन्मुहूर्तं लोह्यन्तरस्थः सलिलाद्रगात्रः ।
निरीक्षमाणस्य जनस्य मध्ये नभस्तलं हंस इवोत्पपात[2] ।।
विचित्राणि च प्रातिहार्याणि[3] दर्शयितुमारब्धः । वक्ष्यति[4] हि ।
अर्धेन[5] गात्रेण ववर्ष तोयमर्धेन[5] जज्वाल हुताशनश्च ।
[6]वर्षञ्ज्वलंश्चैव[7] रराज यः खे [8]दीप्तौषधिप्रस्रवणेव शैलः[8] ।।
तमुद्गतं व्योम्नि निशाम्य राजा कृताञ्जलिर्विस्मयफुल्लवक्त्रः ।
उद्वीक्षमाणस् [9]तमुवाच धीरं कौतुहलात् किंचिदहं विवक्षुः[10] ।।
मनुष्यतुल्यं तव[11] सौम्य[11] रूपमृद्धिप्रभावस्तु नरानतीत्य ।
न निश्चयं तेन विभो व्रजामि को नाम भावस्तव शुद्धभाव[12] ।।
तत् साम्प्रतं ब्रूहि ममेदमर्थं यथा प्रजानामि तव प्रभावं ।
ज्ञात्वा च ते धर्मगुणप्रभावान् यथाबलं शिष्यवदाचरेम[13] ।।

ततो भिक्षुः प्रवचनपरिग्राहकोऽयं भविष्यति भगवद्धातुं च विस्तरीकरिष्यति[14] महाजनहितार्थं च प्रतिपत्स्यत इति मत्वा स्वगुणमुद्भावयं[15]स्तम् उवाच ।

अहं महाकारुणिकस्य राजन् प्रहीणसर्वास्रवबन्धनस्य ।
बुद्धस्य पुत्रो वदतां वरस्य धर्मान्वयः सर्वभवेष्वसक्तः[16] ।।

---

1–2Chl "The Bhikṣu went out of the vessel without a stain on his dress. In the immense crowd there was none who did not see him. He soared into the sky and . . . .". 3Div. *prāṇihā°*. 4Chl *pūrvārdhena gātreṇa*. 5Chl *uttarā°*. 6–7Chl omits. 8Chl "like a great glittering mountain". 9–10Chl "He spoke these words." 11Chl *asya bhikṣoḥ*. 12Div. *°bhāvaḥ*. 12–13Chl reads these three lines: "He has soared into the sky and manifested a great supernatural power! I have not yet understood, but I aspire after the good prediction. Could I know the holy things which you share; I would make efforts for those according to my strength and capacity." 14Div. *°starīṁ kari°*. 15Div. *°bhāvayantam*. 13–16Chl "At that moment the Bhikṣu recognised that king Aśoka was a great *dānapati*, who shall certainly have the power of distributing the relics of Buddha for the benefit of gods and human beings. (The Bhikṣu spoke thus) Buddha has said: 'I am the great compassionate one who breaks bonds. Those who are the sons of Buddha according to the Law, in the three catagories of existence, obtain deliverance.'"

दान्तेन दान्तः पुरुषर्षभेन[१] शान्ति गतेनापि शमं प्रणीतः[२] ।
मुक्तेन संसारमहाभयेभ्यो निर्मोक्षितोऽहं भवबन्धनेभ्यः[३] ॥

अपि च महाराज त्वं भगवता व्याकृतः । वर्षशतपरिनिर्वृतस्य[४] मम पाटलिपुत्रे नगरेऽशोको नाम राजा भविष्यति । चतुर्भागचक्रवर्ती धर्मराजो यो मे शरीरधातून्[५] वैस्तारिकान् करिष्यति । चतुरशीति[६]-धर्मराजिकासहस्रं प्रतिष्ठापयिष्यति । इदं च देवेन नरकसदृशं स्थान-मेव स्थापितं यत्र प्राणिसहस्राणि निपात्यन्ते । तदर्हसि देव सर्वसत्त्वेभ्यो-ऽभयप्रदानं दातुं भगवतश्च[७] मनोरथं परिपूरयितुम् । आह[८] च ।

तस्मान् नरेन्द्र अभयं प्रयच्छ सत्त्वेषु कारुण्यपुरोजवेषु ।
नाथस्य संपूर्य मनोरथं च वैस्तारिकान् धर्मधरान् कुरुष्व[९] ॥

अथ स राजा बुद्धे समुपजातप्रसादः कृतकरसंपुटस्तं[१०] भिक्षुं क्षमयन्नुवाच ।

दशबलसुत क्षन्तुमर्हसीमं[११] कुकृतमिदं च तवाद्य देशयामि ।
शरणमृषिमुपैमि तं च बुद्धं गणवरमार्यनिवेदितं च धर्मं ॥

अपि[१२] च ।

करोमि चैष व्यवसायमद्य[१३] तद्गौरवात् तत्प्रवणप्रसादात् ।
गां मण्डयिष्यामि जिनेन्द्रचैत्यैर्हंसांशुशङ्खेन्दुबलाककल्पैः[१४] ॥

यावत् स भिक्षुस्तदैव[१५] ऋद्ध्या प्रक्रान्तः । अथ राजाऽस्थ्यो निष्क्रा-मितुं । ततश्चण्डगिरिकः कृताञ्जलिर्[१६] उवाच । देव लब्धवरोऽहं नैकस्य विनिर्गम इति । राजाऽह । मा[१७] तावत्[१८] । [१९]मामपीच्छसि घातयितुं ।

स उवाच। एवमेव।

राजाऽह। कोऽस्माकं प्रथमतरं प्रविष्टः।

चण्डगिरिक उवाच। अहं।

ततो राज्ञाऽभिहितं। [1]कोऽत्रेति।

यावद् वध्यघातैर्गृहीतः। गृहीत्वा च यन्त्रगृहं प्रवेशितः। प्रवेशयित्वा दग्धः[2]। तच्च रमणीयकं बन्धनमपनीतं। सर्वसत्त्वेभ्यश्चाभयप्रदानमनुप्रदत्तं॥

ततो राजा [3]भगवच्छरीरधातुं विस्तरिष्यामीति चतुरङ्गेण बलकायेन[4] गत्वाऽजातशत्रुप्रतिष्ठापितं [5]द्रोणस्तूपमुत्पाटच[6] शरीरधातुं गृहीतवान्। यत्र [7]उद्धारणं च विस्तरेण कृत्वा धातुप्रत्यंशं दत्त्वा[8] स्तूपं प्रत्यस्थापयत्[9]। एवं द्वितीयं [10]स्तूपं विस्तरेण। भक्तिमतो यावत् सप्तद्रोणाद् ग्रहाय स्तूपांश्च प्रतिष्ठाप्य[11] रामग्रामं गतः[12]।

[13]ततो राजा नागैर्नागभवनमवतारितः। विज्ञप्तश्च[14]। वयमस्य [शरीरधातोः] अत्रैव पूजां करिष्याम इति। यावद् राज्ञाभ्यनुज्ञातं।

ततो नागराजेन[15] पुनरपि नागभवनादुत्तारितः। वक्ष्यति हि।

रामग्रामेऽस्ति[16] त्वष्टमं स्तूपमद्य
नागास्तत्कालं भक्तिमन्तो ररक्षुः।
[17]धातूनेतस्मान् नोपलेभे स राजा
श्रद्धालू[18] राजा यस्त्वकृत्वा जगाम[19]॥

[1-2]Ch1 reads: "'As you have entered first, you must undergo (submit to) punishment.' Then the king ordered his people to arrest Girika and lead him to the 'torture-hall' ('hall of glue'; Ch2 'house of lac') to burn him alive." [3-4]Ch1 simply *rājagṛhaṁ*. [5-6]Ch1 "four *sheng* (litre or pint)". [6]Div. °*pāṭyā*. [7-8]Ch1 "a big". [9]Div. *pratiṣṭhāpya*. [10-11]Ch1 *dvitīyāt tṛtīyād vistareṇa yāvat saptamāt sarvaṁ (śarīra-dhātuṁ) gṛhītavān*. [12]Ch1 adds: "the abode of Nāgarāja Sāgara, with an intention to take the relics." [14]AC *vijñaptiś ca*. [15]Div. °*rājā*. [16]Div. omits it. [17]Div. *dhātūnye*°. [18]Div. °*bhū*. Div. adds: *cintayati* after *rājā*. [19]ABD *yastvaṁ tatkṛtvā*°, C *yastvatatkṛtvā*°. [13-19]Ch1 reads: "Then the Nāgarāja appeared and invited the king to enter into his palace. The king descended from his boat and entered into the palace of the Nāgarāja. The

[1]यावद् राजा चतुरशीतिकरण्डसहस्रं कारयित्वा सौवर्णरूप्यस्फटिकवैदूर्यमयाणां तेषु धातवः प्रक्षिप्ताः। एवं विस्तरेण चतुर-

---

Nāga said to the king, 'Allow me to make offerings to these (relics), and do not take them away from me.' The king having seen that the Nāgarāja presented them (relics) offerings two times more weighty than those of human beings, abstained from taking the relics and left them behind." Ch2 reads: "The king having made a plan to construct the *stūpas* of Buddha, in grand style, assembled the *caturaṅga* army and went to the *stūpa* named Droṇa erected by king Ajātaśatru. Having reached there he demolished the *stūpa* with the help of his men and took the relics of Buddha. Similarly, he demolished (other) *stūpas*, successively (one by one) up to the seventh. He took all the relics. Then he went to the village called Rāma. In that village he found a *stūpa* which was erected before all the others. This too the king wished to destroy and take the relics. But there was a Nāgarāja who made Aśoka enter his palace of Nāga and said to him, 'This is the *stūpa* to which I bring my offerings; may the king allow it to stand.' The king consented and the Nāgarāja guided the king to the village of Rāma. Then the king said to himself: 'This *stūpa* is (erected) the first of all, and so the Nāgarāja redoubles his zeal to guard it. I will not obtain relics from this *stūpa*.' Thinking thus, he returned to his kingdom."

[1]Ch1 reads: "Returning to his palace, the king made 84 thousand precious caskets. He decorated them with gold, silver, and *vaidūrya* (cat's-eye gem). In each precious casket, he enclosed one relic. Besides, he made 84 thousand pitchers (*kumbha*) and 84 thousand silken bands (*paṭṭa*) of various colours to cover them. He gave each relic to a *yakṣa* for the full extent of Jambudvīpa, to construct a *stūpa* in each country inhabited by a population of one crore. Thereupon the spirits carried all the relics and departed towards the four directions, to construct the *stūpas*. A *yakṣa* who had received one relic arrived at the kingdom of Takṣaśilā where he wished to erect a *stūpa*.

"The inhabitants of the kingdom said, 'The population of our kingdom is 36 crores in total . . . You must give us 36 caskets.' Then the *yakṣa* and the spirits went back to inform the king of what had happened. The king said to himself: 'The people are greatly numerous. If we proceed in this way, the relics will not be sufficient for all Jambudvīpa. I must find out a means to discontinue the distribution.'

"Then he ordered the *yakṣa* to go back to tell the people: '35 crores of people in your kingdom are going to be annihilated. Only one crore of them will remain to whom we shall give one relic.'

शीतिकुम्भसहस्रं पट्टसहस्रं च यक्षाणां हस्ते दत्त्वा विसर्जितम्। आसमुद्रायां पृथिव्यां हीनोत्कृष्टमध्यमेषु नगरेषु यत्र कोटिः परिपूर्यते तत्र धर्मराजिका[1] प्रतिष्ठापयितव्या[2]।

तस्मिन् समये तक्षशिलायां षट्त्रिंशत् कोटयः। तैरभिहितं। षट्त्रिंशत् करण्डकाननुप्रयच्छेति। राजा चिन्तयति। न यदि वैस्तारिका धातवो भविष्यन्ति। उपायज्ञो राजा। तेनाभिहितं। पञ्चत्रिंशत् कोटयः शोधयितव्याः। विस्तरेण यावद् राज्ञा[3]ऽभिहितं। यत्राधिकतरा भवन्ति यत्र च [4]न्यूनतरा तत्र न दातव्यं[5]।

[6]यावद् राजा कुक्कुटारामं गत्वा स्थविरयशसमभिगम्य[7] उवाच। अयं मे मनोरथः। एकस्मिन् दिवसे एकस्मिन् मुहूर्ते चतुरशीतिधर्मराजिकासहस्रं प्रतिष्ठापयेयमिति। स्थविरेणाभिहितम्। एवमस्तु[8]। अहं तस्मिन् समये पाणिना सूर्यमण्डलं प्रतिच्छादयिष्यामीति[9]।

---

"The inhabitants of the kingdom said, "We shall prefer to dispense with the 36 caskets. One alone will give us satisfaction. Do not put us to death.' Then it was done as they desired. They were given only one casket."

Ch2 reads: "(The king) said: 'There are three kinds of kingdoms: the small, the middle and the big. If a kingdom pour out one crore ounces of gold, a royal *stūpa* is to be erected there.' Now, the kingdom of Takṣaśilā poured out 36 crore ounces of gold. The inhabitants of that kingdom said to king Aśoka, 'O king, you must give us thirty-six boxes.' Hearing this the king reflected thus: 'I wish that the *stūpas* of Buddha be erected everywhere in a magnificent way. Is it proper that this kingdom should heap up *stūpas* in such a great number ?'

"Then the king had recourse to a simple procedure. He said to the people, 'We are going to confiscate 35 crore ounces of gold from you.' And he added: 'Henceforth, that a kingdom may have much of *stūpas* or it may have less, I order, in no case one should offer me gold (in order to obtain them in greater number).'"

[1]Div. reads: °*kām*. [2]Div. °*vyam*. [3]Div. reads: *rājā*. [4]Div. *bhūna*°. [5]Ch read the above passage. [6]Chl adds: "having uttered these words". [7]Chl adds: *kṛtāñjalir*. [7–8]Chl reads: ""I wish to construct now 84 thousand precious *stūpas* in Jambudvīpa.' The Sthavira replied, 'That's good, that's good. O king, if you wish to have power to construct (all) the *stūpas*, at the same time....'" [9]Chl adds: "Let the order be given all over the king-

[1]यावत् तस्मिन् दिवसे[2] स्थविरयशसा पाणिना सूर्यमण्डलं प्रतिच्छादितं। एकस्मिन्[3] दिवसे[3] एकमुहूर्ते[3] चतुरशीतिधर्मराजिकासहस्रं प्रतिष्ठापितं। वक्ष्यति[4] च।

ताभ्यः सप्तभ्यः पूर्विकाभ्यः कृतिभ्यो
धातुं तस्यर्षेः स ह्युपादाय मौर्यः[5]।
चक्रे स्तूपानां शारदाभ्रप्रभाणां[6]
लोके साशीति ह्यह्लि चातुःसहस्रं[7]॥

यावच्च राज्ञाऽशोकेन चतुरशीतिधर्मराजिकासहस्रं प्रतिष्ठापितं धार्मिको धर्मराजा[8] संवृत्तस्तस्य धर्माशोक इति संज्ञा जाता। वक्ष्यति च।

[9]आर्यो मौर्यश्रीः स प्रजानां हितार्थं
कृत्स्ने[10] स्तूपान् यः कारयामास लोके[11]।
चण्डाशोकत्वं प्राप्य पूर्वं पृथिव्यां
धर्माशोकत्वं कर्मणा तेन लेभे[12]॥

[13]पांशुप्रदानावदानं षड्विंशतिमं[14]।

dom, that when I shall cover the sun with my hand, at the same moment all be engaged with the construction of the *stūpas*."

[1-2]Chl "afterwards". [3]Chl *jambudvīpe ekasmin samaye*. [5]ABC °*ryaṁ*. [6]Div. *śāradabhra*°. [7]Div. °*siti sāsad ahnā sahasram*. [8]°*rājaḥ*. [9]Div. *ārya*°. [10]Div. °*tsnam*. [11]Div. reads: *stūpān kārayāmāsa lokaś*. [4-12]Chl reads: "When they were constructed entirely, the whole population gave the king the name of 'Dharmāśoka (Aśoka of the Right Law)'. He could spread over the world peace and prosperity. He erected *stūpas* and temples all over the territories of the kingdom. The good could prosper. His name as 'cruel (Caṇḍāśoka)' disappeared and the whole world called him 'the king of the Right Law (Dharmāśoka)'." [13]D adds *iti śrīdivyāvadāne*. [14]D omits. AB °*timaḥ*. C *ṣaḍviṁśatimaḥ*.

# वीतशोकावदानं

यदा राज्ञाऽशोकेन भगवच्छासने श्रद्धा प्रतिलब्धा तेन चतुरशीति-धर्मराजिकासहस्रं प्रतिष्ठापितं। पञ्चवार्षिकं च कृतं। त्रीणि शत-सहस्राणि भिक्षूणां भोजितानि। यत्रैकम्[१] अर्हतां द्वे[२] शैक्षाणां पृथग्जन-कल्याणकानां च। [३]आसमुद्रायां पृथिव्यां जनकाया यद्भूयसा भगवच्छा-सनेऽभिप्रसन्नाः[४]।

तस्य[५] भ्राता वीतशोको[६] नाम तीर्थ्याभिप्रसन्नः। स तीर्थ्यै-र्विग्राहितः[७], नास्ति श्रमणशाक्यपुत्रीयाणां मोक्ष इति[८]। एते हि सुखाभिरताः, परिखेदभीरवश्चेति।

यावद्राज्ञाशोकेनोच्यते। वीतशोक मा त्वं[९] हीनायतने प्रसादमु-त्पादय। अपि तु बुद्धधर्मसङ्घे प्रसादमुत्पादय। एष आयतनगतः प्रसाद इति।

अथ राजाऽशोकोऽपरेण समयेन[१०] मृगवधाय निर्गतः। तत्र [११]वीतशोकेनाऽरण्ये [१२]ऋषिर्दृष्टः। पञ्चातपेनावस्थितः। स च कष्ट-तपःसारसंज्ञी। [१३]तेनाऽभिगम्य पादाभिवन्दनं कृत्वा स ऋषिः पृष्टः। भगवन् कियच्चिरं ते इहारण्ये प्रतिवसतः[१४]। स उवाच। द्वादश-वर्षाणीति। वीतशोकः कथयति। कस्तवाहारः। ऋषिरुवाच। फल-मूलानि। किं प्रावरणं। दर्भचीवराणि। का शय्या। तृणसंस्तरः[१५]। वीतशोक उवाच। भगवन् किं दुःखं बाधते[१६]। ऋषिरुवाच। इमे

---

[1]M8 °*kārha*°. Div. °*ko'rha*°. [2]M8 & Div. read: *dvau*. [3]M8 & Div. omit *ā*. [4]Chl omits this paragraph. [5]Chl "the younger brother of king Aśoka". [6]M8 & Div. °*konāmā*. Chl reads the name as: *hsü tā to*. Sudatta ? Ch2 *vīta*°. [7]Chl adds: "and mocked at the Law of Buddha. He uttered these words." [8]Chl adds: "King Aśoka spoke to Sudatta, 'What do you know of them ?' Suddatta replied, 'Because'....". [9]Div. *tvam anā*°. [10]Chl adds: *sudattena saha*. [11]Chl *tābhyām*. [12]Chl "Brāhmaṇa". [13] Chl adds: "Sudatta expressed a sentiment of faith and respect." [14]Chl *lit. tapasyataḥ*. [15]M8 & Div. °*ram*. [16]Chl "What is the most painful (act) of all that you do now ?"

मृगा ऋतुकाले संवसन्ति। यदा मृगाणां संवासो दृष्टो भवति तस्मिन् समये रागेण परिदह्यामि।

वीतशोक उवाच। अस्य कष्टेन तपसा [वर्तमानस्य] रागोऽद्यापि वाधते[1] प्रागेव। श्रमणाः शाक्यपुत्रीयाः स्वास्तीर्णासनशयनोपसेविनः। कुत एषां रागप्रहाणं भविष्यति। आह च[2]।

कष्टेऽस्मिन् विजने वने निवसता[3] वाय्वम्वुमूलाशिना[4]
रागो नैव जितो यदीह ऋषिणा कालप्रकर्षेण हि।
भुक्त्वान्नं सघृतं प्रभूतपिशितं दध्युत्तमालङ्कृतं
शाक्येष्विन्द्रियनिग्रहो यदि भवेद् विन्ध्यः प्लवेत् सागरे[5] ॥

सर्वथा वञ्चितो राजाऽशोको यच्छ्रमणेषु शाक्यपुत्रीयेषु कारां करोति।

एतच्च वचनं श्रुत्वा राजा उपायज्ञो[6]ऽमात्यान् उवाच। अयं वीतशोकस्तीर्थ्याभिप्रसन्नः[7]। उपायेन भगवच्छासनेऽभिप्रसादयितव्यः[8]।

अमात्या आहुः। देव किमाज्ञापयसि[9]। राजाऽह। यदा[10]ऽहं राजालङ्कारं मौलि[11]पट्टं चापनयित्वा स्नानशालां[12] प्रविष्टो भवामि, तदा यूयं वीतशोकस्य उपायेन मौलि[13]-पट्टं च वद्ध्वा [एनं] सिंहासने निषादयिष्यथ। एवमस्त्विति[14]।

यावद् राजा राजालङ्कारं मौलि[11]पट्टं चापनयित्वा[15] स्नानशालायां प्रविष्टः[16]। ततोऽमात्यैर्वीतशोक उच्यते। राज्ञोऽशोकस्यात्ययात्

[1]M8 & Div. read: *bādhyate* (A °*dhate*). Chl omits this sentence. [1-2]Chl omits. [3]M8 & Div. °*tāṃ*. [4]M8 & Div. °*nāṃ*. [5]Chl reads: "You cover your body with wretched garments; you nourish yourself with poor nourishment and still you have lust! The Śākyaputra Śramaṇas who cover the body with beautiful dresses and nourish it with good food, how can they be free from lust?" [6]Chl omits. [7]Chl omits this sentence. [8]Chl adds: *mokṣaś ca prāpayitavyaḥ*. [9]Chl "We shall do what the king orders." [10]M8 & Div. *yadā*°. [11]Div. °*liṃ*. [12]Div. AB *snānaśālāyāṃ*. [13]M8 & Div. °*liṃ*. [9-14]Chl omits. [15]Chl adds: "He redressed himself with a bath-costume." [16]Chl adds: "and bathed."

त्वं राजा भविष्यसि। इमं तावद्राजालङ्कारं[1] प्रवरमौलि[2]-पट्टं[3] च बद्ध्वा[3] [त्वां] सिंहासने निषादयिष्यामः[4]। किं शोभसे न वेऽति।

[स] तैस्तदाभरणं[5] मौलि[6]पट्टं च बद्ध्वा सिंहासने निषादितः। राज्ञश्च निवेदितं[7]।

[8]ततो राजाऽशोको वीतशोकं राजालङ्कार[9]मौलिपट्टबद्धं[9] च सिंहासनोपविष्टं दृष्ट्वा कथयति। अद्याप्यहं जीवामि, त्वं राजा संवृत्तः। ततो राज्ञाऽभिहितं। कोऽत्र।

ततो[10] यावद् वध्यघातका नीलाम्बरवासिनः[11] प्रलम्बकेशा घण्टाशब्दपाणयो राज्ञः पादयोर्निपत्योचुः[12]। देव किमाज्ञापयसि।

राजाऽह।

वीतशोको मया परित्यक्त[13] इति।

यावद् वीतशोक उच्यते। [14]सशस्त्रैर्वध्यघातैरस्माभिः परिवृतोऽसीति। ततोऽमात्या राज्ञः[15] पादयोर्निपत्य[16] ऊचुः। देव[17] मर्षय वीतशोकं। देवस्यैष भ्राता[18]।

ततो राज्ञाऽभिहितं। सप्ताहमस्य मर्षयामि[19]। भ्राता चैष मम। भ्रातुः स्नेहादस्य[20] सप्ताहं राज्यं प्रयच्छामि[21]।

यावत् तूर्यशतानि संप्रवादितानि[22]। जयशब्दैश्चानन्दितं। प्राणिशतसहस्रैश्चाञ्जलिः कृतः[23]। स्त्रीशतैश्च परिवृतः।

[1]Chl omits *alaṁ*°. [2]Div. °*liṁ*. [3]Chl *badhnihi*. [4]M8 & Div. °*ṣīda*°. [3–4]Chl omits. [5]M8 & Div. °*ṇamau*°. [6–6]Chl "Sudatta followed their advice and being thus decorated, he sat on the royal throne." [7]Chl adds: "The king came out of the bath-room." [8]M8 °*raṁ maulipaṭṭaṁ*°. Div. °*raṁ*°. [9]Chl omits this compound. [10–12]Chl "Then there appeared the Caṇḍālas holding swords in one hand and bells in the other. They approached the king and asked...." [11]M8 °*vāsināḥ*. Div. °*vāsanāḥ*. [13]Chl adds: "I give him to you to punish." M8 *vītaśoka mayā*°. [14]M8 omits *sa*. Chl omits this and the preceding sentence. [15–16]Chl omits. [17–18]Chl "Sudatta is king's own brother. Be pleased to allow him to repent and correct his faults." [19]Chl "I comply with your opinions." [19–20] Chl omits. [20]M8 *bhrātāsnehāmayād asya*. [21]Chl adds: "Then he will be put to death." [22]Div. C *sampraco*°. [22–23]Chl "During these seven days, he was entertained with a hundred thousand tunes of music. A hundred thousand Brāhmaṇas praised him with folded hands." After this it reads: *strīśatasahasraiś ca*°.

श्रुत्वा घण्टारवं घोरं नीलाम्बरधरस्य हि।
भयं मे मरणाज्जातं पार्थिवेन्द्र सुदारुणं[1]।।
मृत्युशल्यपरीतोऽहं नाश्रौपं[2] गीतमुत्तमं।
नाद्राक्षं नृपते नृत्यं न च भोक्तुं मनःस्पृहा।।
मृत्युज्वरगृहीतस्य न मे स्वप्नोऽपि विद्यते।
कृत्स्ना मे रजनी याता[3] मृत्युमेवानुचिन्ततः[4]।।

राजाऽह। वीतशोक। मा तावत्। तवैकजन्मिकस्य मरणभयात् तव राजश्रियं प्राप्य हर्षो नोत्पन्नः। किं पुनर्भिक्षवो ये[5] जन्मशतमरणभयभीताः सर्वाण्युपपत्त्यायतनानि दुःखान्यनुसृतानि पश्यन्ति[6]। नरके तावच्छरीरसंतापकृतमग्निदाहदुःखं च [7]तिर्यक्ष्वन्योन्यभक्षणपरित्रासदुःखं, प्रेतेषु क्षुत्तर्षदुःखं। [8]पर्येष्टिसमुदाचारदुःखं[9] मनुष्येषु। च्यवनपतनभ्रंशदुःखं देवेषु। एभिः पञ्चभि[10]र्दुःखैस्त्रैलोक्यमनुषक्तं[11], शारीरमानसैर्दुःखैरुत्पीडिता वधकभूतान् स्कन्धान् पश्यन्ति। शून्यग्रामभूतान्यायतनानि, चौरभूतानि विषयाणि कृत्स्नं च त्रैधातुकमनित्याग्निना प्रदीप्तं पश्यन्ति। [12]तेषां रागः कथमुत्पद्यते। आह च।

[13]तावदेकजन्मिकस्य मरणभयात्तव न जायते हर्षः।
मनसि विषयैर्मनोज्ञैः सततं खलु पच्यमानस्य।।
किं पुनर्जन्मशतानां मरणभयमनागतं विचिन्तयतां।
मनसि भविष्यति हर्षो भिक्षूणां भोजनाद्येषु[14]।।

---

Because I have seen the Caṇḍālas brandishing swords crying, 'One day you reign; and six days remain for you.' Everyday they spoke thus, till the seventh day."

[1]Chl omits this *śloka*. [2]M8 & Div. °*sīd*. Chl omits this *śloka*. [3]M8 & Div. *jātā*. [4]M8 & Div. °*cintayan*. Chl adds: "What then was my happiness?" [5]M8 & Div. omit *ye*. [5–6]Chl reads: "They contemplate on the ills that afflict us—birth, old age, disease, and death." [7]M8 *tiryagyo[nāva]nyony°*. [8–9]Chl "eight kinds of ills". [10]Chl omits. [11]M8 & Div. *anuśaktaṁ*. M8 *śarira°*. [12–14]Chl reads: "All is impermanent, suffering, void and without any personality (*anityaṁ, duḥkhaṁ, śūnyaṁ, anātmaṁ*). Then, can you say that the Śākya° Śramaṇas are incapable of practising austerity and attaining deliverance?" [13]Div. & M8 add *mā*.

तेषां न[1] वस्त्रशयनासनभोजनादि[2] मोक्षेऽभियुक्तमनसां जनयेत[3] सङ्गं ।
पश्यन्ति ये वधकशत्रुनिभं शरीरमादीप्तवेश्मसदृशांश्च भवाननित्यान्[4] ।।

कथं च तेषां न भवेद् विमोक्षो मोक्षार्थिनां[5] जन्मपराङ्मुखाणां ।
येषां मनः सर्वसुखाश्रयेषु व्यावर्तते पद्मदलादिवाम्भः[6] ।।

यदा वीतशोको राज्ञाऽशोकेनोपायेन भगवच्छासनेऽभिप्रसादितः[7] स कृतकरपुट उवाच । देव[8] एषोऽहं तं भगवन्तं तथागतमर्हन्तं सम्यक्संबुद्धं शरणं गच्छामि । धर्मं च भिक्षुसङ्घं चेति । आह च: ।

एष व्रजामि शरणं विबुद्धनवकमलविमलनिभनेत्रं ।
बुधविबुधमनुजमहितं जिनं[9] विरागं[10] सङ्घं चेति ।।

अथ राजाऽशोको वीतशोकं कण्ठे परिष्वज्योवाच । न[11] त्वं मया परित्यक्तः । अपि तु[12] बुद्धशासनाभि[13]प्रसादार्थं तव मया एष उपायः प्रदर्शितः[14] ।

ततो वीतशोको गन्धपुष्पमाल्यादिवादित्रसमुदयेन[15] भगवतश्चैत्यानर्चयति[16] । सद्धर्मं च शृणोति । सङ्घे च कारां कुरुते ।

स [17]कुक्कुटारामं गतः । तत्र यशो नाम स्थविरः अर्हन्[18] षडभिज्ञः[19] । स तस्य पुरतो निषण्णो धर्मश्रवणाय । स्थविरश्च तमवलोकयितुमारब्धः[19] ।

[20]स पश्यति वीतशोकमुपचितहेतुकं चरमभविकं तेनैवाश्रयेनार्हत्वं[21] प्राप्तव्यं । तेन तस्य प्रव्रज्याया वर्णो भाषितः । तस्य श्रुत्वा

---

[1]MS reads *nu*. Div. *tu*. [2]MS & Div. AC °*nādyā*. [3]Div. AB °*yeta*, C °*ye ca*, D °*ye*. MS °*yet*. [4]Chl omits this *śloka*. [5]Chl *bhoga-vimukhānām*. MS *katham ca teṣām ca bhaved*°. [6]Chl "The mind of the Śramaṇa is not polluted by the objects of pleasure, just as water does not get attached to lotus flower [leaf?]." [7]Chl "King Aśoka instructed Sudatta in every way." [8]Chl reads simply: "Great king, now I take refuge in the *triratna* (the Three Jewels)." [9]Div. & MS *jina*. [10]Div. & MS add: *ca*. [11–12]Chl omits. [13]MS & Div. ABC °*saṅgha chi*°. [14]Chl adds: "Certainly I will not put you to death." [15]Chl *gandha-puṣpebhyām*. [16]Div. *ārca*°. [17]MS & Div. *kurkuṭ*°. [18]Chl omits. [19]Chl omits this sentence. [20]Chl adds: "Then Yaśah contemplated on the former existences of Sudatta." [21]Chl *nirvāṇam*.

स्पृहा[1] जाता[1]। प्रव्रजेयं भगवच्छासने। तत उत्थाय कृताञ्जलिः स्थविरमुवाच। लभेयमहं[2] स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावं चरेयमहं भवतो[3]ऽन्तिके ब्रह्मचर्यं। स्थविर उवाच। वत्स। राजानमशोकमनुज्ञापयस्वेति।

[4]ततो वीतशोको येन राजाऽशोकस्तेनोपसंक्रम्य कृताञ्जलिरुवाच। देव अनुजानीहि मां। प्रव्रजिष्यामि स्वाख्याते धर्मविनये सम्यगेव श्रद्धयाऽगारादनागारिकां। आह च[5]।

उद्भ्रान्तोऽस्मि निरंकुशो गज इव व्यावर्तितो[6] विभ्रमात्[6]
त्वद्बुद्धिप्रभवांकुशेन विधिवद् बुद्धोपदेशैर्[7] अहं।
एकं[8] त्वर्हसि मे वरं प्रवरितुं[9] त्वं पार्थिवानां पते
लोकालोकवरस्य शासनवरे लिङ्गं शुभं धारये[10]॥

श्रुत्वा च राजा साश्रुकण्ठो[11] वीतशोकं[12] कण्ठे[12] परिष्वज्योवाच। वीतशोक। अलमनेन व्यवसायेन। प्रव्रज्या खलु वैवर्णिकाभ्युपगता[13], वासः पांशुकूलं।

प्रावरणं[14] परिजनोज्झितम्। आहारो भैक्षं परकुले[15]। शयनासनं[16] वृक्षमूले तृणसंस्तरः पर्णसंस्तरः। व्याबाधे खल्वपि[17] भैषज्यमसुलभं। पूतिमुक्तं[18] च भोजनं[19]। त्वं च सुकुमारः शीतोष्णक्षुत्पिपासानां दुःखानामसहिष्णुः। प्रसीद निवर्तय मानसं।

वीतशोक उवाच। देव।

---

[1]Chl reads: "transported with joy". [2]Div. & M8 *labheyāhaṁ*°. [3]M8 *bhagavato*. [4–5]Chl "Then Sudatta went to tell the king, 'Great king, permit me to leave the world.'" [6]Chl "I have been made submissive and docile." [7]Chl omits it. [8]Div. *ekaṁ* (D *evaṁ*) *tvam*°, M8 *ekatvam*°. [9]Div. & M8 *pradarśituṁ*. [10]M8 & Div. *dhārayet*. [8–10]Chl "Condescend to express your great compassion by permitting me to embrace the religious life where the Great light (*ālokavara*) is glittering." [11]M8 *kaṇṭhe*. [12]M8 omits. [13]Chl "to live in the same manner as the people of low rank". [14]Chl omits. [14–15]Chl "For nourishment, one has to beg for the remains of food (eaten by somebody)." [16]M8 *śayyā*° (indistinct). Div. *cchānāsanaṁ*. [17–19]Chl "to take care of oneself with repulsive medicine". [18]M8 & Div. *dhūti*°.

नैवाहं तन्न जाने न[1] विषयतृषितो नायासविहृत:
प्रव्रज्यां प्राप्तुकामो न रिपुहृतवलो[2] नैवार्थकृपण: ।
दु:खार्तं मृत्युनेष्टं व्यसनपरिगतं दृष्ट्वा जगदिदं
पन्थानं जन्मभीरु: शिवमभयमहं [3]गन्तुव्यवसित: ।।

श्रुत्वा राजाशोक: सशब्दं[4] प्ररुदितुमारब्ध: । अथ वीतशोको राजानमनुनयन्नुवाच । देव[5] ।

संसारदोलामभिरुह्य लोलां यदा निपातो नियत: प्रजानां[6] ।
किमर्थमागच्छति विक्रिया ते सर्वेण सर्वस्य यदा वियोग: ।।

राजाऽह । वीतशोक । भैक्षे तावदभ्यास: क्रियतां । राजकुले वृक्षवाटिकायां तस्य तृणसंस्तर: संस्तृत: । भोजनं[7] चास्य दत्तं । सोऽन्त:पुरं पर्यटति महार्हं चाहारं [8]लभते ।

[9]ततो राज्ञाऽन्त:पुरिकाभिहिता । प्रव्रजितसारूप्यमस्याहारमनुप्रयच्छेति । तेन यावदभिदूषिता[10] पूतिकमाषा लब्धा:[11] । तांश्च

[1]M8 reads: *naivāhaṁ jāne taṁ nūnaṁ*. Div. A *naiva hi jāne tam anunaṁ*, B *naivāha jāneta manunaṁ*, C omits *naiva*, it reads *hi jāne tam anunam*, D °*hi jāne tam anūnam*. [2]Div. AB °*hatabalo*. [3]M8 & Div. *gantuṁ*. Chl "Now I aspire to leave this world. This is not because I am disgusted with royal dignity, nor because I disdain the fortune that one enjoys among the *devas*, nor because one is afflicted by the multitude of ills till the state of Non-being (*niḥsattva*), nor because I contempt the riches and the treasure, nor because I am afraid of passions which are our rebellious enemies. It is because I dread the ills of birth, old age, disease and death that I aspire to leave this world. It is to attain Nirvāṇa that I aspire to leave this world!" [4]M8 & Div. *satvaraṁ*. The Chinese reading is adopted here. [5]Chl "Sudatta said, 'You should not grieve.'" [6]Chl "The wheel of transmigration revolves without stop." [7]Chl *daṇḍaḥ pātraṁ cā*°. [8]M8 & Div. add *na* which is not found in Chinese. [9-11]Chl "The king accused the concubines, saying, 'Why do you give him this excellent nourishment? Give him gross and wretched food, so that he may be accustomed to it.' They obeyed and gave him gross and wretched food." [10]M8 *yāvad dūṣita*. Div. BC *pūtikulamāṣā*. D *dhūti*°. A *vūti*°. [11]Div. *labdhā tāṁ ca*. M8 too reads the same.

परिभोक्तुमारब्धः[1]। दृष्ट्वा राज्ञाऽशोकेन निवारितः[2]। अनुज्ञातश्च प्रव्रज[3], किन्तु प्रव्रजित्वा उपदर्शयिष्यसि।

स यावत् कुक्कुटारामं[4] गतः। तस्य बुद्धिरुत्पन्ना। यदि इह प्रव्रजिष्यामि आकीर्णो भविष्यामि। ततो विदेहेषु[5] जनपदेषु गत्वा प्रव्रजितः[6]। ततस्तेन युज्यता[7] यावदर्हत्त्वं प्राप्तं।

अथायुष्मतो वीतशोकस्य अर्हत्त्वं[8] प्राप्तस्य विमुक्तिप्रीतिसुखसंवेदिन[9] एतदभवत्। [10]अस्ति खलु मे [द्रष्टुकामो भ्राता। ततः पाटलिपुत्राय प्रस्थितः।] पूर्वं[11] राज्ञोऽशोकस्य गृहद्वारमनुप्राप्तः। ततो दौवारिकमुवाच। गच्छ [12]राज्ञोऽशोकस्य निवेदय[13] वीतशोको द्वारि[13] तिष्ठति[13] देवं द्रष्टुकाम इति।

ततो दौवारिको राजानमशोकमभिगम्योवाच। देव, दिष्टया[14] वृद्धि[15]र्वीतशोकोऽभ्यागतो द्वारि तिष्ठति देवं द्रष्टुकामः। ततो राज्ञाऽभिहितं। गच्छ शीघ्रं प्रवेशयेति।

यावद् वीतशोको राजकुलं प्रविष्टः। दृष्ट्वा च राजाशोकः सिंहासनादुत्थाय मूलनिकृत्त[16] इव द्रुमः सर्वशरीरेण [भूमौ निपतितः। ततः स] आयुष्मन्तं वीतशोकं निरीक्षमाणः[17] प्ररुदन्नुवाच।

भूतेषु[18] संसर्गगतेषु नित्यं दृष्ट्वापि मां नैति यथा विकारं।
विवेकवेगाधिगतस्य शङ्के प्रज्ञारसस्यातिरसस्य तृप्तः[18]॥

---

[1]Chl reads: "Then he ate them without any change in his manners." [2]Chl omits this word. [3]M8 °*vrā*°. [4]M8 & Div. *kurku*°. [5]Chl translated Videha for *videśa* (*ta fang*). Ch2 same as the text. [6]Chl adds: "and learned the Way." [7]Chl "and having practised with perfect attention". [8–9]Chl omits. [10–11]Chl "'Formerly, king Aśoka made the following request: 'When you will leave the world, you must come to see me (*pravrajitvā upadarśayiṣyasi*).' Now, I must go and see him.' Then, before midday, he got up, took his bowl and went to the town of Pāṭaliputra. Gradually, begging his food....". [12–13]Chl omits. [14]M8 & Div. *dṛṣṭvā*. [14–15]Chl omits. [15]Div. & M8 °*ddhi vi*°. [16]M8 & Div. °*nikṛnta*. [16–17]Chl reads: "With five parts of his body, he touched the ground and prostrated himself before Sud (Suda°). When he got up, he joined his hands and looked at Sudatta." [17]Div. °*kṣya*°. [18]Chl "Reunion is a joy to all kinds of living creatures. Now, I look at your eyes and do not find there any expression of

[1]अथ राज्ञोऽशोकस्य राधगुप्तो नामाग्रामात्यः। स[2] पश्यत्यायुष्मतो वीतशोकस्य पांशुकूलं च चीवरं मृन्मयं पात्रं [3]यावदन्नभक्षं लूहप्रणीतं। दृष्ट्वा च राज्ञः पादयोर्निपत्य कृताञ्जलिरुवाच। देव[4] यथायमल्पेच्छः सन्तुष्टश्च नियतमयं कृतकरणीयो भविष्यति। [5]प्रीतिरुत्पाद्येत[6]। कुतः।

भैक्षान्नभोजनं यस्य पांशुकूलं च चीवरं।
निवासो वृक्षमूलं च तस्य ह्यनियतं[7] कथं॥
निरास्रवं यस्य मनो विशालं निरामयं चोपचितं शरीरं।
स्वच्छन्दतो[8] जीवितसाधनं च नित्योत्सवं तस्य मनुष्यलोके॥

श्रुत्वा ततो राजा प्रीतमना उवाच[9]।

अपहाय मौर्यवंशं मगधपुरं सर्वरत्ननिचयं च।
दृष्ट्वा वंशनिवहं[10] [नु] प्रहीणमदमानमोह[11]सारम्भं॥
अत्युद्धतमिव मन्ये यशसा पूतं पुरमिव गेहं[12] च।
प्रतिपद्यतां त्वया [वै] दशबलधरशासनमुदारं[13]॥

अथ राजाऽशोकः सर्वाङ्गेण[14] परिगृह्य प्रज्ञप्त[15] एवासने[16] निषादयामास। प्रणीतेन चाहारेण स्वहस्तं सन्तर्पयति। भुक्तवन्तं[17]

---

tenderness. There is no doubt that you have obtained the Supreme Fruit; the ambrosia fills your heart."

[1–2]Chl reads: "Rādhagupta". [3–4]Chl "Calmly, he begged his food and received all that is excellent as well as wretched. He (Rādha°) went towards the king and recited this *gāthā*: 'Everyone who sees Sudatta is filled with joy.'" [5–6]Chl "And that is why he can rejoice." [6]M8 & Div. *utpādayata*. [7]M8 & Div. *tasyāni*°. [8]M8 °*ndo*(*dā*) *ji*°. [6–9]Chl omits. [10]M8 °*hanaṁ*. [11]M8 & Div. °*haṁ sā*°. [12]Div. A *mchaṁ*, rest & M8 *mahaṁ*. [13]M8 & Div. *udāre*. Chl reads: "He has renounced the royal succession, the city of Pāṭaliputra, riches and treasures as well as fortune and glory, as one allows to drop a drop of tear or a spittle. He has trampled with his feet his saintly race. Detached for ever from all riches, he has consecrated the royal lineage and made it attain a great glory." [14–15]Chl omits. [16]Chl *siṁhāsane*. [17]Chl "When the meal was taken, pure water was served. He (Aśoka) took a low seat and sat before him (Sudatta), and asked him to preach the Law. Then Sudatta recited for him (the king) the following *gāthā*:"

विदित्वा धौतहस्तमपनीत[1]पात्रमायुष्मतो वीतशोकस्य पुरतो निषण्णो धर्मश्रवणाय।

अथायुष्मान् वीतशोको राजानमशोकं धर्म्यया कथया संदर्शयन्नुवाच[2]।

अप्रमादेन[3] सम्पाद्य राजैश्वर्यं प्रवर्ततां[4]।
दुर्लभ[5]त्रीणि रत्नानि नित्यं पूजय पार्थिव॥

स यावद् धर्म्यया कथया संप्रहर्षयित्वा[6] संप्रस्थित:[7]। अथ राजाऽशोक: कृतकरपुट: पञ्चभिरमात्यशतै: परिवृतोऽनेकैश्च पौरजन[8]सहस्रै: परिवृत: पुरस्कृत आयुष्मन्तं वीतशोकमनु[9]व्रजितुमारब्ध:। वक्ष्यति[10] हि।

भ्राता ज्येष्ठेन राज्ञा तु गौरवेणानुगम्यते।
प्रव्रज्याया: खलु श्लाघ्यं[11] संदृष्टिकमिदं फलं[12]॥

तत[13] आयुष्मान् वीतशोक: स्वगुणानुद्भावयन् पश्यत: सर्वजनकायस्य ऋद्धया वैहायसमुत्पत्य प्रक्रान्त:। अथ राजाऽशोक: कृतकरपुट: प्राणिशतसहस्रै: परिवृत: पुरस्कृतो गगनतलावसक्तदृष्टिरायुष्मन्तं वीतशोकं निरीक्षमाण[14] उवाच[15]।

स्वजनस्नेहनि:सङ्गो विहङ्ग इव गच्छसि।
श्रीरागनिगडैर्बद्धानस्मान् प्रत्यादिशन्निव[16]॥

---

[1]M8 & Div. read: °*nīya*. [1–2]Chl: *cf.* above. [3]M8 & BCD *apramādyena*, A *apramodyena*. M8 *saṁvādya*. [3–4]Chl "The roya[l] dignity is noble and venerable. Do not neglect (the duty).' [5]Div. & M8 *durlabhā*. [6]Div. & M8 *saṁhar*°. [7]Chl "Having recite[d] this *gāthā*, he got up from the throne." [8]Div. °*janapada*°. [9]M8 °*nupravra*°. [10]Chl omits this. [10–12]Chl "So glorified for havi ng realized the Fruit of Śramaṇa, Sudatta reflected thus: 'Formerly, my elder brother converted me by various means and made me enter into the Law of Buddha. Now, I must see that his faith and respect be increased.'" [11]Div. & M8 *ślāghyasaṁ*°. [13–15]Chl "Then he soared into the sky and worked all sorts of marvels. King Aśoka with the multitude of his ministers, raised his hands and recited these *gāthās*:" [14]M8 & Div. °*kṣya*°. [15]M8 adds: *āha ca*. [16]Chl reads this line and the following as: "I am bound

आत्मायत्तस्य शान्तस्य मनःसंकेतचारिणः ।
ध्यानस्य फलमेतच्च रागान्धैर्यन् न दृश्यते ॥

[1]अपि च[2] ।

ऋद्धया खल्ववभर्त्सिताः[3] परमया श्रीगर्वितास्ते वयं
वुद्धया खल्वपि नामिताः शिरसिताः[4] प्रज्ञाभिमानोदयाः[5] ।
प्राप्तार्थेन फलान्धवुद्धिमनसः [6]संवेजितास्ते वयं
संक्षेपेण सवाष्पदुर्दिनमुखाः स्थाने विमुक्ता वयं[7] ॥

तत्रायुष्मान् वीतशोकः प्रत्यन्तिकेषु[8] जनपदेषु शय्याशनाय[9] निर्गतः । [10]तस्य च महाव्याधिरुत्पन्नः[11] । श्रुत्वा च राज्ञाऽशोकेन भैषज्यमुपस्थायकाश्च[12] विसर्जिताः[13] । तस्य तेन व्याधिना स्पृष्टस्य शिरः खुस्तमभवत्[14] । यदा च व्याधिर्निर्गतस्तस्य[15] विरूढानि शिरसि रोमाणि[16] । तेन वैद्योपस्थायकाश्च[17] विसर्जिताः । [18]तस्य च गोरसः[19] प्राय आहारोनुसेव्यते । स घोषं गत्वा भैक्षं पर्यटति[20] ।

तस्मिंश्च समये पुण्डवर्धननगरे निर्ग्रन्थोपासकेन वुद्धप्रतिमा निर्ग्रन्थस्य पादयोर्निपतिता चित्रार्पिता[21] । उपासकेनाशोकस्य राज्ञो निवेदितं[22] । श्रुत्वा च राज्ञाऽभिहितं शीघ्रमानीयतां[23] ।

---

by bonds of royal dignity. I extend my influence and affection over the things of this world. By disregard and by contempt for his ego, he is liberated by his own power. He has tasted the Fruit as he has achieved mastery over himself."

[1-2]Chl omits. [3]M8 & Div. read: °*bhatsitāḥ*. [4]M8 & Div. °*sitā pra*°. [5]M8 & Div. °*dayam*. [6]M8 *sarvaji*°. [2-7]Chl reads: "Here by *ṛddhi* (*lit.* by taking your flight) you have destroyed my pride. Although my wisdom and power be weak, manage it so that I may attain detachment." [8]Div. °*meṣu*. [9]M8 °*sanān*. Div. AB *śayyasanā*, CD *śayyāsanā*. Chl omits this. [10]Chl adds: "and having arrived at a foreign kingdom". [11]Div. *mahān vyādhi*°. Chl adds: "and the hair of his head fell." [12]Div & M8 *upasthāyi*°. Chl "one doctor". [13]Chl adds: "who carried (with him) medicines, went to his place and attended him (Sudatta)." [14]Div. A *khastam*°. Chl omits this sentence. [15-16]Chl reads: "His hair shot out again as before." [17]Chl omits *upa*°. [18]Chl adds: "Henceforth". [19]Chl "fermented milk". M8 & Div. °*rasāḥ . . . rānusevate*. [20]Chl "In order to procure it (milk) easily, he went to the jungle and lived near by the shepherds." [21]Div. ABC *citrāpitā*. [22-23]Chl reads: "The disciples of the heretic Nirgrantha have etc. etc."

[1]तस्योर्ध्वं योजनं यक्षाः शृण्वन्ति। अधो योजनं नागाः। यावत्तं तत्क्षणेन यक्षैरुपनीतं। दृष्ट्वा च राज्ञा रुषितेनाभिहितं। पुण्डवर्धने सर्वे आजीविकाः प्रघातयितव्याः। यावदेकदिवसेऽष्टादश-सहस्राणि आजीविकानां प्रघातितानि[1]।

ततः पाटलिपुत्रे भूयोऽन्येन निर्ग्रन्थोपासकेन बुद्धप्रतिमा निर्ग्रन्थस्य पादयोर्निपतिता चित्रार्पिता। [2]श्रुत्वा च राज्ञाऽमर्षितेन स निर्ग्रन्थो-पासकः सबन्धुवर्गो गृहं प्रवेशयित्वाऽग्निना दग्धः। आज्ञप्तं[3] च यो मे निर्ग्रन्थस्य शिरो दास्यति तस्य दीनारं[4] दास्यामि। इति घोषितं।

स चायुष्मान् वीतशोक आभीरस्य गृहे रात्रिवासमुपगतः[5]। तस्य च व्याधिना[6] क्लिष्टस्य[6] लूहानि चीवराणि दीर्घकेशनख[6]श्मश्रु[6]। [7]आभीर्या बुद्धिरुत्पन्ना निर्ग्रन्थोऽयमस्माकं गृहे रात्रिवासमुपगतः[8]। स्वामिनमुवाच। आर्यपुत्र सम्पन्नोऽयमस्माकं दीनारः। इमं निर्ग्रन्थं प्रघातयित्वा शिरो राज्ञोऽशोकस्योपनामयेयमिति[8]।

ततः स आभीरोऽसिं निष्कोपं कृत्वा[9] आयुष्मन्तं वीतशोकमभि-गतः। [10]आयुष्मता च वीतशोकेन पूर्वान्तं ज्ञानं क्षिप्तं। पश्यति स्वयंकृतानां कर्मणां फलमिदमुपस्थितं। ततः कर्मप्रतिशरणो भूत्वा-ऽवस्थितः। तेन तयाऽस्याभीरेण शिरश्छिन्नं[11]। राज्ञोऽशोकस्योपनीतं। दीनारं प्रयच्छेति।

---

[1]Ch1 continues: "Hearing this news, the king got angry and sent off the *yakṣas* to the distance of forty *li* (*i.e.* one *yojana*) in the air and the *nāgas* to the distance of forty *li* beneath the earth. They put to death . . . in the town of Pāṭaliputra(?) (for Puṇḍavardhana)." Ch2 reads: "Puṇḍa°". [2]Ch1 adds: "Then the *upāsakas* informed this to the king." [3]M8 & Div. ABC *ājñāptaṁ*. [4]Ch1 "pieces of gold". Ch2 "a piece of gold". [5]Div. & M8 °*triṁ vāsa*°. Ch1 "Sudatta received hospitality in the house of a Nirgrantha." [6]Ch1 omits. Div. °*nakha-śmaśruḥ*. [7–8]Ch1 omits these sentences. [8–9]Ch1 reads: "His appearance was similar to that of a *nirgrantha-putra*. One demon holding a sword . .". [10–11]Ch1 "Sudatta said to himself: 'For having passed the night here, I must be put to death by this demon.' Then the demon, believing that he was a *nirgrantha-putra*, cut off also his head." Ch2 reads in accordance with the text. [10]Div. & M8 *pūrvānte jñānam*.

दृष्ट्वा च राज्ञाऽशोकेन न परिज्ञातं। [1]विरलानि चास्य शिरसि रोमाणि न व्यक्तिमुपगच्छन्ति। ततो वैद्या उपस्थायका[2] आनीताः। तैर्दृष्ट्वाभिहितं। देव[3] वीतशोकस्यैतत् शिरः। [4]श्रुत्वा राजा[5] मूर्च्छितो भूमौ पतितः। यावज् [6]जलसेकं दत्त्वा स्थापितः[7]। अमात्यैश्चाभिहितं। [8]देव वीतरागाणामपि अत्र पीडा जाता। दीयतां सर्वसत्त्वेष्वभयप्रदानं[9]।

यावद्राज्ञाऽभयप्रदानं दत्तं, न भूयः कश्चित् प्रघातयितव्यः[10]।

ततो भिक्षवः संशयजाताः सर्वसंशयछेत्तारम्[11] आयुष्मन्तमुपगुप्तं पृच्छन्ति। किं कर्म कृतमायुष्मता वीतशोकेन यस्य कर्मणो विपाकेन शस्त्रेण प्रघातितः[12]। स्थविर उवाच। तेन ह्यायुष्मन्तः कर्माणि कृतानि पूर्वमन्यासु जातिषु। श्रूयतां[13]।

भूतपूर्वं भिक्षवोऽतीतेऽध्वनि अन्यतमो लुब्धो मृगान्[14] प्रघातयित्वा जीविकां कल्पयति। अटव्यामुदपानं। स तत्र लुब्धो गत्वा पाशान् यन्त्रांश्च स्थापयित्वा मृगान् प्रघातयति[15]।

असति बुद्धानामुत्पादे प्रत्येकबुद्धा लोके उत्पद्यन्ते। विस्तरः[16]। अन्यतरः प्रत्येकबुद्धस् [17]तस्मिन्नुदपाने आहारकृत्यं कृत्वोदपानादुत्तीर्य[18] वृक्षमूले पर्यङ्केण[19] निषण्णः। [20]तस्य गन्धेन मृगास्तस्मिन्नुदपाने

[1]Chl, Div. & M8 °*kena parijñātaṁ*. [1–3]Chl omits. [2]B °*yikā*. [4]Chl adds: "He learnt further from one of his ministers that the (supposed, so-called) Śramaṇa heretics were put to death in multitude; while in fact, they (the heretics) were only a few. The king was deeply aggrieved." [4–5]Chl "with heaped up sorrows". [6]Chl adds: *mukhe*. [7]Chl "After a long time, he regained consciousness." [8–10]Chl " 'Actually numerous are the Śramaṇas who are put to death in error. O king, grant safety to the Śramaṇas.' Then the king proclaimed an edict in the following terms: 'Henceforth, not any more Śramaṇa will be allowed to be put to death.' " [9]M8 *abhayadānaṁ*. [11]Chl omits this word. [12]Chl "Why was Sudatta put to death by a demon?" [13]Chl "If you want to know, listen with attention." M8 *bhūtapūrvam a[ti]te*. [14–15]Chl *udapānasamīpaṁ pāśān sthāpayati*. [15–16]Chl omits. [17–18]Chl *piṇḍāya caritvā pāśasamīpaṁ*. [19]Chl omits this word. M8 °*ṅka(ke)*°. [20]Chl "The hunter could not catch any deer. He said to himself: 'Why these deer which are so numerous

नाभ्यागताः। स लुब्ध आगत्य पश्यति नैव मृगा उदपानमभ्यागताः। पदानुसारेण च तं प्रत्येकबुद्धमभिगतः। दृष्ट्वा चास्य बुद्धिरुत्पन्ना। अनेनैष आदीनव उत्पादितः[१]। तेनासिं निष्कोषं कृत्वा स प्रत्येकबुद्धः प्रघातितः।

[२]किं मन्यध्वे आयुष्मन्तः[३]। योऽसौ लुब्धः स एष वीतशोकः। यत्रानेन[४] मृगाः प्रघातितास् तस्य कर्मणो विपाकेन महान् व्याधिरुत्पन्नः[३]।

यत्प्रत्येकबुद्धः शस्त्रेण प्रघातितस्तस्य कर्मणो विपाकेन बहूनि वर्षसहस्राणि[४] नरकेषु दुःखमनुभूय [५]पञ्चजन्मशतानि मनुष्येषूपपन्नः[६] शस्त्रेण प्रघातितः[७]। तत्कर्मविशेषेणैतर्हि अर्हत्त्वप्राप्तोऽपि शस्त्रेण प्रघातितः[८]।

किं कर्म कृतं येन उच्चकुले[९] उपपन्नः[१०]। अर्हत्त्वं च प्राप्तं।

स्थविर उवाच। काश्यपे सम्यक्सम्बुद्धे प्रव्रजितः[११]। अभूत् प्रदानरुचिः। तेन दायकदानपतयः सङ्घभक्ताः[१२] कारापिताः। तर्पणानि यवागूपानानि निमन्त्रणकानि[१३] [कारापितानि] स्तूपेषु च छत्राण्यवरोपितानि[१४]। ध्वजपताकागन्धमाल्यपुष्पवादित्रसमुदयेन पूजाः कृताः[१५]। तस्य कर्मणो विपाकेनोच्चकुल उपपन्नः[१६]। यावद् दशवर्षसहस्राणि ब्रह्मचर्यं चरित्वा[१७] सम्यक् प्रणिधानं कृतं[१८]। तस्य कर्मणो विपाकेनार्हत्त्वं प्राप्तमिति।

इति श्रीदिव्यावदाने[१९] वीतशोकावदानमष्टाविंशतितमं[२०]।

---

do not come to my nets ?' Then he looked in all directions and saw the Pratyeka Buddha seated under a tree near the nets."
[1]Chl: *cf.* above. [2–3]Chl omits. [4]Chl reads: *kalpakoṭiśo*°. [5–6]Chl "at last he found the Way". [7]Chl adds: "by this demon (*yakṣeṇa*)". [7–8]Chl omits. [8]M8 & Div. *arhatprāpto*°. [9–10]Chl omits. [11]Chl reads *saṅghe* for *pravra*°. M8 *abhūt prādā*°. [12]Div. & M8 °*bhaktāṁ*. [13]Div. *mantraṇakāni*. M8 *yavāgupā nim*°. [14]Div. & M8 *chatrāvaropitāni dhvajāḥ patākā*°. [12–15]Chl omits these sentences. [16]Chl adds: *tadā ca sa śraddhayā pravrajitaḥ*. [17–18]Chl *acarat*. [19]Div. ABC omit. M8 °*dānamālāyāṁ*. [20]Div. °*timam*. D °*maḥ*. M8 *ekoṇaviṁśati*.

# कुनालावदानं

## यशोऽमात्योपाख्यानं

[1]स इदानीमचिरजातप्रसादो बुद्धशासने यत्र शाक्यपुत्रीयान् ददर्श, आकीर्णे रहसि वा तत्र शिरसा पादयोर्निपत्य वन्दते स्म।

तस्य च यशो[2] नामामात्यः परमश्राद्धो भगवति। स तं राजानमुवाच।

देव नार्हसि सर्ववर्णप्रव्रजितानां प्रणिपातं कर्तुं। सन्ति हि शाक्यश्रामणेरकाश्चतुर्भ्यो वर्णेभ्यः प्रव्रजिता इति। तस्य राजा न किंचिदवोचद्।

अथ स राजा केनचित् कालान्तरेण सर्वसचिवान् उवाच। विविधानां प्राणिनां शिरोभिः कार्यं। तत्त्वममुकस्य प्राणिनः शीर्षमानय त्वममुकस्येति[3]। यशोऽमात्यः[4] पुनराज्ञप्तस्त्वं मानुषं[5] शीर्षमानयेति। [6]समानीतेषु च शिरःस्वभिहिताः। गच्छतेमानि शिरांसि मूल्येन विक्रीणीध्वमिति[7]।

अथ सर्वशिरांसि विक्रीतानि। तदेव मानुषं शिरो न कश्चिज्

---

[1–3]Chl reads: "Formerly, when king Aśoka saw monks, he prostrated himself before all without any distinction of rank. Dignitaries with perverse views were astonished at what he was doing. They said: 'If an aged person with great merits is seen, one honours him by prostrating oneself. But why should a man take the trouble of honouring a young man without merit, by prostrating himself before him? The king reigns over vast Jambudvīpa. His name is holy and held in reverence. He should respect his own personality himself. Why does he humiliate his own self by prostrating himself?' This remark having been circulated came to the ear of the king. When he came to know it, he assembled all his ministers. Without being authorised to kill a living creature, each was obliged to order his men to procure a head of a particular species, be it the head of a horse or bull or of any quadrupeds (*lit.* of the hundred quadrupeds)." [2]CD *yaśā*. [4]Chl "the great minister Yaśaḥ". MSS. *yaśā°*. [5]Chl adds: "self-murderer". [6–7]Chl "Everyone of them must get these heads sold in the market."

जग्राह[1]। ततो राज्ञाऽभिहितः। [2]विनापि मूल्येन कस्मैचिद् एतच्छिरो देहीति।

न चास्य कश्चित् प्रतिग्राहको बभूव। ततो यशोऽमात्यस्तस्य शिरसः प्रतिग्राहकमनासाद्य सव्रीडो राजानमुपेत्येदमर्थमुवाच[3]।

[4]गोगर्दभोरभ्रमृगद्विजानां मूल्यैर्गृहीतानि शिरांसि पुम्भिः।
शिरस्त्विदं मानुषमप्रशस्तं न गृह्यते मूल्यमृतेऽपि राजन्॥

अथ स राजा तममात्यमुवाच। किमिदमिति। इदं मानुषशिरो न कश्चिद् गृह्णातीति।

अमात्य उवाच। जुगुप्सितत्वादिति[5]। राजाऽब्रवीत्। किमेतदेव शिरो जुगुप्सितमाहोस्वित् सर्वमानुषशिरांसीति। अमात्य उवाच। सर्वमानुषशिरांसीति।

राजाऽब्रवीत्। [6]किमिदं मदीयमपि शिरो जुगुप्सितमिति[7]। स च भयान्नेच्छति तस्माद् भूतार्थमभिधातुं। स राज्ञाऽभिहितः[8]। अमात्य सत्यमुच्यतामिति। स उवाच। एवमिति[9]।

ततः स राजा तममात्यं प्रतिज्ञायां प्रतिष्ठाप्य प्रत्यादिशन्निममर्थमुवाच। हं भो रूपैश्वर्यजनितमदविस्मित युक्तमिदं भवतः। यस्मात्त्वं भिक्षुचरणप्रणामं मां विच्छन्दयितुमिच्छसि।

विनापि मूल्यैर्विजुगुप्सितत्वात् प्रतिग्रहीता भुवि यस्य नास्ति।
शिरस्तदासाद्य ममेह पुण्यं यद्यर्जितं किं विपरीतमत्र[10]॥

---

[1]Chl adds: "All the men (of the ministers) said, 'The heads taken for sale have all been sold, except the head of the human being.'" [2–3]Chl "'Why is it not sold? Among all the creatures which one is the greatest?' The ministers replied, 'Certainly, man is the greatest.' The king said, 'If man is the greatest of all, he must have great value. Why then, it remains unsold?'" [4–5]Chl "The ministers replied, 'Though honoured during his life, is there anything more contemptible than a man when he is dead? The head of a (dead) man is a thing which none likes any more to look at. So there was none to buy it.'" [6–7]Chl "If all human heads are contemptible, is not mine also?" [8]MSS. °*tam*. [9]Chl adds: "As Your Majesty has said, really there is no difference." [9–10]Chl omits.

जातिं भवान् पश्यति शाक्यभिक्षुष्वन्तर्गतांस्तेषु गुणान्न चेति[1]।
अतो भवान् जातिमदावलेपादात्मानमन्यांश्च हिनस्ति मोहात् ॥
आवाहकालेऽथ विवाहकाले जातेः परीक्षा न तु धर्मकाले।
धर्मक्रियाया हि गुणा निमित्ता गुणाश्च जातिं न विचारयन्ति ॥
यद्युच्चकुलीनगता दोषा गर्हां प्रयान्ति लोकेऽस्मिन्।
कथमिव नीचजनगता गुणा न सत्कारमर्हन्ति ॥
चित्तवशेन हि पुंसां कडेवरं निन्द्यतेऽथ सत्क्रियते।
शाक्यश्रमणमनांसि च शुद्धान्यर्चाम्यतः[2] शाक्यान् ॥
यदि गुणपरिवर्जितो द्विजातिः पतित इति प्रथितोऽपि यात्यवज्ञां।
ननु[3] निधनकुलोद्गतोऽपि जन्तुः शुभगुणयुक्त इति प्रणम्यपूज्यः ॥

अपि च।

किं ते कारुणिकस्य शाक्यवृषभस्यैतद् वचो न श्रुतं
प्राज्ञैः सारमसारकेभ्य इह यन्त्रेभ्यो[4] ग्रहीतुं क्षमं।
तस्यानन्यथवादिनो यदि च तामाज्ञां चिकीर्षाम्यहं[5]
व्याहन्तुं च भवान् यदि प्रयतते नैतत् सुहृल्लक्षणं ॥
इक्षुक्षोदवद् उज्झितो भुवि यदा कायो मम स्वप्स्यति
प्रत्युत्थाननमस्कृताञ्जलिपुटक्लेशक्रियास्वक्षमः।
कायेनाहमनेन किन्नु[6] कुशलं शक्ष्यामि कर्तुं तदा
तस्मान् न्वर्हमतः[7] श्मशाननिधनात् सारं ग्रहीतुं मया ॥

---

[1]MSS. *reti*. [2]MSS. *°graheṣv ataḥ*. [3]MSS. *na tu*. [4]All the MSS. read *yantre°* except D which reads *yan bhrtye*. [5]MSS. *°yad°*. [1-7]Chi reads this passage as: "The king said, 'If my head is not different from that one, why do you prevent me from prostrating myself? If you are a sincere friend of mine, you must exhort me to prostrate myself. Why do you laugh at me while I prostrate myself? Now when my head has some value I should prostrate myself and exchange it (head) while it is still valuable; for, afterwards it will be worth nothing. What better use could I make of it than by exchanging it for a head of higher value? Henceforth, my virtuous and intimate friends must exhort me to fall prostrate while my head still holds all its value, so that in future, I may obtain the divine body (*deva-deha*) and the sublime head of sages.'" [6]MSS. *kintu*. [7]MSS. *tasmān nāgra°*.

स्तूपवन्दनायाम् आत्मानमलङ्कर्तुकामो[1]ऽमात्यगणपरिवृतः कुक्कुटारामं गत्वा तत्र वृद्धान्ते स्थित्वा कृताञ्जलिर्[2] उवाच।

[3]अस्ति कश्चिदन्योऽपि निर्दिष्टः[4] सर्वदर्शिना।
यथाहं तेन निर्दिष्टः पांशुदानेन[5] धीमता॥

तत्र यशो नाम्ना सङ्घस्थविर उवाच। अस्ति महाराज। यदा[6] भगवतः परिनिर्वाणकालसमय[7]स्तदाऽपलालं नागं दमयित्वा कुम्भकारीं[8] चण्डालीं गोपालीं च नागं च मथुरामनुप्राप्तः[9]।

तत्र भगवानायुष्मन्त[10]मानन्दम् आमन्त्रयत[11]। अस्यामानन्द मथुरायां वर्षशतपरिनिर्वृतस्य तथागतस्य गुप्तो नाम्ना गान्धिको[12] भविष्यति। तस्य पुत्रो भविष्यत्युपगुप्तो नाम्ना [13]अववादकानामग्रः अलक्षणको बुद्धो यो मम वर्षशतपरिनिर्वृतस्य बुद्धकार्यं करिष्यति[14]।

[15]पश्यसि त्वमानन्द दूरत[16] एव[16] नीलनीलाम्बरराजिं[17]। एवं भदन्त। एष आनन्द उरुमुण्डो नाम पर्वतोऽत्र [18]वर्षशतपरिनिर्वृतस्य तथागतस्य[19] नटभटिका नामारण्यायतनं भविष्यति। [20]एतदग्रं मे

---

[1]Chl begins: "When king Aśoka had completed the construction of the *stūpas,* he was overcome with joy." [2]Chl omits it. [3]Chl adds here: "in Jambudvipa among the numerous persons". [4]MSS. add *dvitīyaḥ*. CD *sarvadarśino*. [5]Chl omits. [7]MSS. *°ye ta°*. [8]MSS. *°kālaṁ caṇḍāligo°*. [6–9]Chl "Formerly, when Buddha reached the kingdom of Uḍḍiyana, he subdued the dragon Apapo (Ch2 Apalāla). In the kingdom of Kashmir, he converted the Brāhmaṇa (*lit.* the master Brāhmaṇa). In the kingdom of Gandhāra, he converted Caṇḍāla. In the kingdom of Gandhāra he subdued the bull (*go*) and the Nāga. Thereupon, he proceeded again to the kingdom of Mathurā." Ch2 reads the names as: Apalāla Nāgarāja, Kumbhakāra, Caṇḍāla, Nāga(rāja); it omits Gopalī. [10]AB *āyuṣmam ā°*. C *°man ā°*. D *°mān ā°*. [11]MSS. *°te*. [12]Chl *gṛhapatir*. [13–14]Chl "Although he may not have the exterior marks (on his body), he will make conversion like Buddha (*buddha-kāryaṁ*). Without entering into ecstasy he will have the power to read the thoughts of all living beings, within the distance of a *yojana*. He will be the best o all, in giving instructions in the courses of *dhyāna* (*avavādakānān agraḥ* ?)." [15]Chl adds: "And once more Buddha said to Ānanda...' [16]Chl *idāniṁ*. [17]Chl *°lāraṇyaṁ*. [18–19]Chl omits. [20]Chl "For th (construction of) buildings and for their disposition, this pl

[1]आनन्द भविष्यति शमथानुकूलानां शय्यासनानां यदुत नटभटिका नामारण्यायतनम्। आह च।

अववादकानां प्रवर उपगुप्तो महायशाः।
व्याकृतो लोकनाथेन बुद्धकार्यं करिष्यति॥

राजाऽह[1]।

किं पुनः स शुद्धसत्त्व उपपन्नः। [2]अथाद्यापि नोत्पद्यत इति[2]। स्थविर उवाच। उत्पन्नः स महात्मा उरुमुण्डे पर्वते [3]जितक्लेशोऽर्हद्गणैः[4] परिवृतस्तिष्ठति [5]लोकानुकम्पार्थं। अपि च देव[6]।

सर्वज्ञलीलो हि स शुद्धसत्त्वो धर्मं[7] प्रणीतं वदते गणाग्रे[8]।
देवा[9]सुरेन्द्रोरगमानुषांश्च सहस्रशो[10] मोक्षपुरं प्रणेता॥

तेन[11] खलु समयेनायुष्मानुपगुप्तोऽष्टादशभिरर्हत्सहस्रैः परिवृतो नटभटिकारण्यायतने प्रतिवसति। श्रुत्वा च[12] राजाऽमात्यगणान् आहूय कथयति।

संनाह्यतां हस्तिरथाश्वकायः[13] शीघ्रं प्रयास्याम्युरुमुण्डशैलं।
द्रक्ष्यामि सर्वास्रव[14]विप्रमुक्तं साक्षादर्हन्तं[15] ह्युपगुप्तमार्यं[15]॥

ततोऽमात्यैरभिहितः। देव[16] दूतः प्रेषयितव्यो विषयनिवासी[17] स देवस्य[18] स्वयमेवागमिष्यति। राजाऽह। [19]नासावस्माकमर्हत्यभिगन्तुं। किन्तु वयमेवार्हामस्तस्याभिगन्तुं। अपि च[20]।

---

will be the best of all. People will be able to practise *dhyāna*. These are the (two) predictions made by Buddha (regarding you). The king having heard these words said to the Sthavira..." [1]Chl: *cf.* above. [2]Chl omits. [3–4]Chl reads: *sarva-bandhanāni chittvā arhattvaṁ prāpya aṣṭādaśa-sahasra-arhad°*. [4]A °*rhad varṇaiḥ*. [5–6]Chl omits. [7–8]Chl "In favour of sages, saints, and all kinds of living creatures, he opens, by his prediction (*i.e.* prediction of Buddha regarding him), the doors of the Law (Dharma)." [9]Chl *devāṁś ca yakṣora°*. [10]Chl *amānuṣān* ("those who are not human beings"). [11–12]Chl omits. [13]Chl adds here: "as well as foot-soldiers". [14]MSS. °*śrava°*. [15]Chl "The Sthavira Upagupta and the multitude of (other) Sthaviras who have attained Deliverance." MSS. °*ptanāma*. °*ptanāthaṁ* ? [16]Chl adds: "That state is small and our soldiers are extremely numerous." [17]A *viṣaprativāsī*. [17–18]Chl: *tam āhvayituṁ*. [19–20]Chl "I must go to see him. Why? Becuase, I who have not yet obtained 'the mind as firm as a diamond' could not

मन्ये वज्रमयं तस्य देहं शैलोपमाधिकं ।
शास्तृतुल्योपगुप्तस्य यो ह्याज्ञामाक्षिपेन् नरः[१] ।।

यावद् राज्ञा स्थविरोपगुप्तस्य सकाशं[२] दूतः [३]प्रेषितः स्थविर-दर्शनाय[४] आगमिष्यामीति । स्थविरोपगुप्तश्चिन्तयति । यदि[५] राजा-ऽगमिष्यति महाजनकायस्य पीडा भविष्यति । गोचरस्य च । ततः स्थविरेणाभिहितं[६] । स्वयमेवागमिष्यामीति ।

[७]ततो राज्ञा स्थविरोपगुप्तस्यार्थे नौयानेनागमिष्यतीति यावच्च मथुरां यावच्च पाटलिपुत्रमन्तरान् नौसङ्क्रमोऽवस्थापितः । अथ स्थविरोपगुप्तो राज्ञोऽशोकस्य अनुग्रहार्थम्[८] अष्टादशभिरर्हत्सहस्रैः परिवृतो नावमभिरुह्य पाटलिपुत्रमनुप्राप्तः ।

[९]ततो राजपुरुषै राज्ञोऽशोकस्य निवेदितं । देव दिष्ट्या[१०] वर्धस्व । अनुग्रहार्थं तव सोपगुप्तश्चित्तेश्वरः शासनकर्णधारः पुरस्कृतस्तीर्ण-भवौघपारैः सार्धं समभ्यागत एव पद्भ्यां[११] ।

श्रुत्वा च राज्ञा प्रीतमनसा शतसहस्रमूल्यो[१२] मुक्ताहारः स्वशरीरादवनीय प्रियाख्यायिनो दत्तः । घाण्टिकं[१३] चाहूय कथयति । घुष्यन्तां पाटलिपुत्रे घण्टाः[१४] । स्थविरोपगप्तस्यागमनं निवेद्यतां ।

उत्सृज्य[1] दारिद्रमनर्थमूलं[2] यः स्फीतशोभां श्रियमिच्छतीह ।
[3]स्वर्गापवर्गाय च हेतुभूतं स पश्यतां कारुणिकोपगुप्तं[3] ॥
येभि[4]र्न दृष्टो द्विपदप्रधानः शास्ता महाकारुणिकः स्वयम्भूः ।
ते शास्तृकल्पं स्थविरोपगुप्तं पश्यन्त्युदारं त्रिभवप्रदीपं ॥

[5]यावद्राजा पाटलिपुत्रे घण्टां[6] घोषयित्वा[6] नगरशोभां[7] च कारयित्वा[8] अर्धतृतीयानि[9] योजनानि गत्वा सर्ववाद्येन सर्वपुष्पगन्धमाल्येन[10] सर्वपौरैः सर्वामात्यैः सह स्थविरोपगुप्तं प्रत्युद्गतः ।

ददर्श राजा स्थविरोपगुप्तं दूरत[11] एव[11] अष्टादशभिरर्हत्सहस्रैरर्धचन्द्रेणोपगुप्तं[12] । यदन्तरं च राजा स्थविरोपगुप्तमद्राक्षीत्[13] तदन्तरं हस्तिस्कन्धाद् अवतीर्य पद्भ्यां[14] नदीतीरमभिगम्य[15] एकं पादं नदीतीरे स्थाप्य[16] द्वितीयं नौफलके स्थविरोपगुप्तं[17] सर्वाङ्गेणानुपरिगृह्य नाव उत्तारितवान् । उत्तार्य च मूलनिकृत्त[18] इव द्रुमः सर्वशरीरेणोपगुप्तस्य पादयोर्निपतितो[19] मुखतुण्डकेन च पादावनुपरिमार्ज्य उत्थाय द्वौ[20] जानुमण्डलौ पृथिवीतले निक्षिप्य[21] कृताञ्जलिः स्थविरोपगुप्तं[22] निरीक्षमाण उवाच ।

यदा[23] मया शत्रुगणान् निहत्य[24] प्राप्ता समुद्राभरणा सशैला[25] ।
एकातपत्रा पृथिवी तदा[26] मे प्रीतिर्न सा या स्थविरं[27] निरीक्ष्य ॥

---

[1]Chl omits. [2–3]Chl "'Those who wish to be born among the *devas*, wish to be liberated and (wish to) see Tathāgata, come together to make offering to Upagupta.' And he recited the following *gāthā*:" [4]Wrong reading for *yaiḥ*. Vedic & Pali influence. Chl "Creatures who wish to see the most venerable among the bipeds, the great compassionate one, the Hero, one who rose without master (*svayaṁbhū*?) whose teaching, similar to that of Buddha, illuminates the three worlds, may all assemble here and go to meet him." [5]Chl adds: "The king having recited the *gātha*". [6]Chl omits. [7]Chl adds: *mārgaśobhāṁ*. [8]Chl adds: *kusumapurān nirgatya*. [9]Chl *ardhayojanaṁ*. [10]Chl *sarvagandhena*. [11]Chl *āgacchantaṁ*. [12]Chl *lit. parivṛtaṁ*. [12–13]Chl omits. [14–15]Chl omits. [16]=*sthāpayitvā*. [17–19]Chl "The king received the Venerable Upagupta graciously. He prostrated himself humbly. He lay down on the earth with the five parts of his body." [18]MSS. °*nikṛnta*. [20–21]Chl omits. [22]Chl adds: *śraddhayā*. [23]Chl *idānīṁ*. [24]Chl adds: *jambudvīpaṁ jitaṁ*. [25]Chl adds: *sapattanā dhanānvitā*. [26]Chl *pūrvaṁ*. [27]Chl adds: *svacakṣuṣā*.

त्वद्दर्शनान् मे द्विगुणप्रसादः संजायतेऽस्मिन् वरशासनाग्रे[२]।
त्वद्दर्शनाच्चैव परोपि शुद्धो[४] दृष्टो मयाद्य अप्रतिमः[५] स्वयम्भूः[६] ॥
अपि[७] च।
शान्तिगते कारुणिके जिनेन्द्रे त्वं बुद्धकार्यं कुरुषे त्रिलोके[९]।
नष्टे[८] जगन्मोहनमीलिताक्षे त्वमर्कवज् ज्ञानवभासकर्ता[९] ॥
त्वं शास्तृकल्पो जगदेकचक्षुरववादकानां प्रवरः शरण्यं[१०]।
विभो[११] ममाज्ञां वद शीघ्रमद्य कर्तास्मि वाक्यं तव शुद्धसत्त्व[११] ॥
अथ स्थविरोपगुप्तो दक्षिणेन पाणिना राजानं शिरसि परिमार्जयन्नुवाच।
अप्रमादेन संपाद्य[१२] राजैश्वर्यं[१३] प्रवर्ततां[१४]।
दुर्लभत्राणि रत्नानि नित्यं पूजय पार्थिव ॥
अपि च महाराज[१५] तेन भगवता[१६] तथागतेनार्हता[१५] सम्यक्सम्बुद्धेन तव च मम शासनमुपन्यस्तं सत्त्वसारथिवरेण[१५] गणमध्ये[१५] परीत्तं परिपाल्यं यत्नतोऽस्माभिः। राजाऽह[१६]। स्थविर यथाऽहं निर्दिष्टो भगवता तदेवानुष्ठीयते। कुतः।
[१७]स्तूपैर्विचित्रैर्गिरिशृङ्गकल्पैश्[१८]
छत्रध्वजैश्चोच्छ्रितरत्नचित्रैः।
[१९]संशोभिता मे पृथिवी समन्ताद्[२०]
वैस्तारिका धातुधराः कृताश्च[२१] ॥

अपि च ।

आत्मा पुत्रो[1] गृहं दारा:[2] पृथिवी कोशमेव च ।
न किञ्चिदपरित्यक्तं धर्मराजस्य शासने[3] ।।

स्थविरोपगुप्त आह । साधु साधु महाराज । एतदेवानुष्ठेयं ।

कुतः ।

ये [4]धर्ममुपजीवन्ति कायैर्[5] भोगैश्च जीवितैः[6] ।
गते काले न शोचन्ति इष्टं यान्ति सुरालयं ।।

यावद्[7] राजा महता[8] श्रीसमुदयेन[8] स्थविरोपगुप्तं राजकुले प्रवेशयित्वा सर्वाङ्गेणानुपरिगृह्य प्रज्ञप्त एवासने निषादयामास । स्थविरोपगुप्तस्य शरीरं मृदु सुमृदु[9] । तद्यथा तूलपिशुर्वा [10]कर्पासपिशुर्वा ।

अथ राजा [11]स्थविरोपगुप्तस्य शरीरसंस्पर्शमवगम्य[11] कृताञ्जलिरुवाच ।

मृदूनि तेऽङ्गानि उदारसत्त्व तूलोपमाङ्गं काशिकोपमं च[12] ।
अहं त्वधन्यः खरकर्कशाङ्गो निःस्पर्शगात्रः परुषाश्रयश्च ।।

स्थविर उवाच ।

दानं मनापं सुशुभं प्रणीतं दत्तं मया ह्यप्रतिपुद्गलस्य ।
न पांशुदानं हि मया प्रदत्तं यथा त्वयाऽदायि तथागतस्य[13] ।।

राजाह । स्थविर ।

बालभावादहं पूर्वं क्षेत्रं[14] प्राप्य[15] ह्यनुत्तरं ।
पांशून् रोपितवांस्तत्र फलं यस्येदृशं मम ।।

अथ स्थविरो राजानं[1] संहर्षयन्नुवाच[2]। महाराज।

पश्य क्षेत्रस्य माहात्म्यं पांशुर्यत्र विरुह्यते।
राजश्रीर्येन ते प्राप्ता आधिपत्यमनुत्तरं[3]॥

श्रुत्वा च राजा विस्मयोत्फुल्लनेत्रः[4] अमात्यानाहूयोवाच।

बलचक्रवर्तिराज्यं प्राप्तं मे पांसुदानमात्रेण।
[5]केन भगवान् भवन्तो नार्चयितव्यः प्रयत्नेन[5]॥

अथ राजा स्थविरोपगुप्तस्य पादयोर्निपत्योवाच। स्थविरोऽयं मे मनोरथो ये भगवता बुद्धेन प्रदेशा अध्युषितास्तान्[6] अर्चेयं। चिह्नानि च कुर्यां[7] पश्चिमस्यां जनतायामनुग्रहार्थं[8]।

स्थविर उवाच[9]। साधु महाराज [10]शोभनस्ते चित्तोत्पादः[11]। अहं[12] प्रदर्शयिष्याम्यधुना।

[13]बुद्धेनाध्युषिता देशास्तान् नमस्ये कृताञ्जलिः।
गत्वा चिह्नानि तेष्वेव करिष्यामि न संशयः[14]॥

अथ राजा चतुरङ्गबलकायं संनाह्य गन्धमाल्यपुष्पमादाय[15] स्थविरोपगुप्तसहायः[16] संप्रस्थितः। अथ स्थविरोपगुप्तो राजानमशोकं सर्वप्रथमेन लुम्बिनीवनं प्रवेशयित्वा दक्षिणं हस्तमभिप्रसार्योवाच। अस्मिन् महाराज प्रदेशे भगवान् जातः। आह च।

इदं हि प्रथमं चैत्यं बुद्धस्योत्तमचक्षुषः।
जातमात्रेह स मुनिः प्रक्रान्तः सप्तपदं भुवि॥

---

[1-2]Chl "with a courteous countenance said". [2-3]Chl "He whose field of merit (*kṣetra*) is incomparable can manage so that for a gift of dust the retribution be so great and precious." [4]Chl "experienced joy that he never experienced before." [5]Chl "That is why one must, with a zealous heart, make offerings to the Three Jewels (*triratnaṁ*)." [6-7]Chl *teṣu sarveṣu stūpān pratiṣṭhāpayāmi.* [8]Chl *janatāyāṁ śraddhāṁ prasādañ ca utpādayituṁ.* MSS. add here: *āha ca. ye buddhena bhagavatā pradeśā adhyuṣitās tān arcayann ahaṁ gatvā cihnāni caiva kuryāṁ paścimāṁ janatāṁ anukampārthaṁ.* This is not found in the Chinese translations. [9]Chl "The Venerable praised him with these words:" [10-11]Chl omits. [12]Chl adds: *tān sarvān.* [13]MSS. *ye buddhena bhagavatā'dhyu°.* [13-14]Chl omits. [15]Chl *sugandhipuṣpamālyagandhalepaiḥ sarvopahāraiḥ sthavaropaguptam abhyarcya.* [16]MSS. *°sahiyaḥ.*

देवता प्राह[1]।

मया हि दृष्टः कनकावदातः प्रजायमानो[2] द्विपदप्रधानः।

पादानि सप्त क्रममाण एव श्रुताश्च वाचा[3] अपि तस्य शास्तुः॥

राजाऽह। कथय[4] देवते कीदृशी भगवतो जायमानस्य श्रीर्बभूवेति[5]। देवता[6] प्राह। न शक्यं मया वाग्भिः संप्रकाशयितुमपि तु संक्षेपतः शृणु[7]।

विनिर्मिताभा[8] कनकावदाता सैन्द्रे[9] त्रिलोके नयनाभिरामा[10]।

ससागरान्ता च मही सशैला महार्णवस्था इव नौ[11]श्चचाल॥

यावद्राज्ञा जात्यां[12] शतसहस्रं[13] दत्तं। चैत्यं च प्रतिष्ठाप्य राजा प्रक्रान्तः। अथ स्थविरोपगुप्तो राजानं कपिलवस्तु निवेशयित्वा दक्षिण-हस्तमभिप्रसार्योवाच। अस्मिन् प्रदेशे महाराज बोधिसत्त्वो राज्ञः शुद्धोदनस्योपनामितः। तं[14] द्वात्रिंशन्महापुरुषलक्षणालंकृतशरीरमसेच-नकदर्शनं च दृष्ट्वा राजा सर्वशरीरेण बोधिसत्त्वस्य पादयोर्निपतितः[15]।

इदं महाराज शाक्यवर्धं नाम देवकुलम्[16]। अत्र बोधिसत्त्वो जातमात्र उपनीतो देवमर्चयिष्यतीति। सर्वदेवता[17] च बोधिसत्त्वस्य पादयोर्निपतिता। ततो राज्ञा शुद्धोदनेन बोधिसत्त्वो देवतानामप्ययं देव इति तेन बोधिसत्त्वस्य देवातिदेव[18] इति नामधेयं कृतं। अस्मिन् प्रदेशे महाराज बोधिसत्त्वो ब्राह्मणानां[19] नैमित्तिकानां [20]विपश्चिकानाम् उपदर्शितः[21]। अस्मिन् प्रदेशेऽसितेन ऋषिणा निर्दिष्टो बुद्धो लोके भविष्यतीति।

---

[1]Chl adds: "this *gāthā*". [2]Chl omits it. [3]Chl *lit.* "voice". MSS. *śrutā ca vācam api.* [4–5]Chl "What happened at the moment of birth of the Adorned One?" [6]Chl *vṛkṣa-de°*. [7]Chl adds: "Then she recited this *gāthā*:" [8]Chl omits. [9]D *sendre.* [9–10]Chl "Human beings and gods were delighted at the sight of him." [11]MSS. *nau cacāla.* [12]Chl "in that place". [13]Chl *lit.* "a hundred thousand ounces of gold". [14]MSS. *dvātriṁśatā ma°*. [14–15]Chl omits. [15–16]Chl "Then he showed the place where people sacrificed to the gods of the Śākyas." [17]Chl "But the images of gods made of wood and clay came to venerate him and...". [18]Chl "god among gods". Ch2 "god of gods". [19]Chl omits. [20]MSS. *°ñcikā°*. Chl omits. [21]MSS. *°taṁ.*

अस्मिन् प्रदेशे महाराज [1]महाप्रजापत्या संवर्धितः। अस्मिन् प्रदेशे लिपिज्ञानं शिक्षापितः। अस्मिन् प्रदेशे हस्तिग्रीवायामश्वपृष्ठे रथे शरधनुग्रहे तोमरग्रहेऽङ्कुशग्रहे कुलानुरूपासु विद्यासु[2] पारगः संवृत्तः। इयं बोधिसत्त्वस्य [3]व्यायामशाला बभूव। अस्मिन् प्रदेशे महाराज बोधिसत्त्वो [4]देवतागतसहस्रैः परिवृतः[5] षष्टिभिः स्त्रीसहस्रैः सार्धं रतिमनुभूतवान्।

अस्मिन् प्रदेशे बोधिसत्त्वो जीर्णातुरमृतसंदर्शनोद्विग्नो वन[6]संश्रितः[7]। अस्मिन् प्रदेशे जम्बुच्छायायां निषद्य विविक्तं[8] पापकैरकुशलैर्धर्मैः सवितर्कं सविचारं[9] विवेकजं प्रीतिसुखमनास्रवसदृशं प्रथमध्यानं समापन्नः[10]। अथ परिणते मध्याह्नेऽतिक्रान्ते भक्तकालसमयेऽन्येषां वृक्षाणां छाया प्राचीननिम्ना प्राचीनप्रवणा प्राचीनप्राग्भारा जम्बुच्छाया[11] बोधिसत्त्वस्य कायं न जहाति। [12]दृष्ट्वा च पुनर्[13] राजा शुद्धोदनः[14] सर्वगात्रेण बोधिसत्त्वस्य पादयोर्निपतितः। अनेन द्वारेण बोधिसत्त्वो देवतागतसहस्रैः परिवृतोऽर्धरात्रे[15] कपिलवस्तुनो निर्गतः।

अस्मिन् प्रदेशे बोधिसत्त्वेन छन्दकस्याश्वमाभरणानि च दत्वा प्रतिनिवर्तितः। [16]आह च।

[17]छन्दकाभरणान्यश्वश्चास्मिन् प्रतिनिवर्तितः[18]।
निरपेक्षको वीरः प्रविष्टैकस्तपोवनं[19] ॥

[1]अस्मिन् प्रदेशे बोधिसत्त्वो लुब्धकसकाशात् काशिकैर्वस्त्रैः काषायाणि वस्त्राणि प्रहाय[2] प्रव्रजितः[3]। अस्मिन् प्रदेशे भार्गवेणाऽश्रमेणोपनिमन्त्रितः[4]। अस्मिन् प्रदेशे बोधिसत्त्वो राज्ञा बिम्बिसारेणार्धराज्येनोपनिमन्त्रितः। अस्मिन् प्रदेशे [5]आराडोद्रकमभिगतः। [6]आह च।

उद्रकाऽराडका नाम ऋषयोऽस्मिन् तपोवने।
अविगतार्थसत्त्वेन[7] पुरुषेन्द्रेण तापिताः[8]॥

अस्मिन् प्रदेशे बोधिसत्त्वेन षड्वर्षाणि दुष्करं चीर्णं। [9]आह च।

षड्वर्षाणि हि[10] कटुकं तपस्तप्त्वा महामुनिः।
नायं मार्गो ह्यभिज्ञाया इति ज्ञात्वा समत्यजत्[11]॥

अस्मिन् प्रदेशे बोधिसत्त्वेन नन्दाया नन्दबलायाश्च ग्रामिकदुहित्रोः[12] सकाशात् [13]षोडशगुणितं मधुपायसं [14]परिभुक्तं।

[15]आह च।

अस्मिन् प्रदेशे नन्दाया[16] भुक्त्वा च मधुपायसं[17]।
बोधिमूलं महावीरो[18] जगाम [19]वदतां वरः[20]॥

[21]अस्मिन् प्रदेशे बोधिसत्त्वः कालिकेन[22] नागराजेन [23]बोधिमूलमभिगच्छन्[24] संस्तुतः।

आह[1] च।

कालिकभुजगेन्द्रेण संस्तुतो वदतां वरः।
प्रयातोऽनेन मार्गेण बोधिमण्डेऽमृतार्थिकः[2] ॥

अथ राजा स्थविरस्य पादयोर्निपत्य कृताञ्जलिरुवाच।

अपि[3] पश्येम नागेन्द्रं येन दृष्टस्तथागतः।
व्रजानोऽनेन मार्गेण मत्तनागेन्द्रविक्रमः[4] ॥

अथ कालिको[5] नागराजः स्थविरसमीपे स्थित्वा कृताञ्जलिरुवाच। स्थविर किमाज्ञापयसीति। अथ स्थविरो राजानमुवाच। अयं स महाराज कालिको[6] नागराजा येन भगवान् अनेन[7] मार्गेण बोधिमूलं निर्गच्छन्[8] संस्तुतः। अथ राजा कृताञ्जलिः कालिकं[9] नागराजमुवाच[10]।

दृष्टस्त्वया ज्वलितकाञ्चनतुल्यवर्णः
शास्ता ममाऽप्रतिसमः शरदेन्दुवक्त्रः[11]।
आख्याहि मे दशबलस्य गुणैकदेशं
तत्कीदृगी वद हि श्रीः[12] सुगते[13] तदानीं[13] ॥

कालिक[14] उवाच। न शक्यं[15] वाग्भिः संप्रकाशयितुमपि तु संक्षेपं शृणु।

चरणतल[16]पराहतः सशैलो
ह्यवनितलः[17] प्रचचाल षड्विकारं।
रविकिरणविभाविका[18] नृलोके
सुगतशशिद्युतिरक्षया[19] मनोज्ञा[20] ॥

---

1–2Chl omits. 1MSS. *kālikena bhu°*. 2MSS. *°rthinaḥ*. 3–4Chl "'Now I wish to question Kāla, the Nāgarāja, on the circumstances under which he had seen Buddha.' Then the Venerable said to the Nāgarāja: 'Quickly appear! Quickly appear! The king wishes to question you on that which took place when you saw Buddha.'" 5Chl omits it. 6Chl "Kāla". 7–8Chl *gāthayā* (*lit.* reciting one *gāthā*). 9–10Chl *gāthām uvāca*. 11Chl *sakalendu°*. 12MSS. *vada bhavan*. The Chinese reading is adopted here. 13Chl "When he advanced towards the Bodhi-tree (*gate bodhimūlaṁ ?*)." 14Chl *nāgarāja*. 15Chl *na śakyā sā śrīḥ*. 16Chl *°talahatā sasindhuśailā*. 17Chl *°nir bhṛśaṁ*. MSS. *°tā saśailā avanis tadā*. 18MSS. *°kiraṇapra°*. 19MSS. *°dyuti-sannibhā*. 18–20Chl *raviśaśikiraṇādhikaiḥ* [*triloke*] *sugatatanūkiraṇair diśā babhāse*.

यावद् राजा चैत्यं प्रतिष्ठाप्य प्रक्रान्तः। अथ स्थविरोपगुप्तो राजानं बोधिमूलमुपनामयित्वा दक्षिणं करमभिप्रसार्योवाच। अस्मिन् प्रदेशे महाराज बोधिसत्त्वेन महामैत्रीसहायेन सकलं मारबलं जित्वानुत्तरा सम्यक्सम्बोधिरभिसम्बुद्धा। [1]आह च।

इह मुनिवृषभेण बोधिमूले नमुचिबलं विकृतं निरस्तमाशु।
इदममृतमुदारमग्र्यबोधि ह्यधिगतमप्रतिपुद्गलेन तेन[2]॥

यावद् राजा बोधौ शतसहस्रं[3] दत्तं। चैत्यं च प्रतिष्ठाप्य[4] राजा प्रक्रान्तः। अथ स्थविरोपगुप्तो राजानमशोकमुवाच[5]। अस्मिन् प्रदेशे भगवान् चतुर्णां महाराजानां[6] सकाशात् चत्वारि शैलमयानि[7] पात्राणि गृहाय [8]एकपात्रमधियुक्तं[9]। अस्मिन् प्रदेशे त्रपुषभल्लिकयोर्वणिजोरपि पिण्डपातं प्रतिगृहीतं[10]। अस्मिन् प्रदेशे भगवान् [11]वाराणसीमभिगच्छन् उपगणेनाजीविकेन संस्तुतः[12]। यावत् स्थविरो राजानम् ऋषिपतनम्[13] उपनीय दक्षिणं हस्तमभिप्रसार्योवाच। अस्मिन् प्रदेशे महाराज भगवता त्रिपरिवर्तं[14] द्वादशाकारं धार्म्यं[15] धर्मचक्रं प्रवर्तितं। [16]आह च[17]।

शुभं[18] धर्ममयं चक्रं संसारविनिवर्तये।
अस्मिन् प्रदेशे नाथेन प्रवर्तितमनुत्तरं[19]॥

अस्मिन् प्रदेशे जटिलसहस्रं[20] प्रव्राजितं[21]। अस्मिन् प्रदेशे राज्ञो बिम्बिसारस्य धर्मं देशितं। राज्ञा च बिम्बिसारेण सत्यानि दृष्टानि

[१]चतुरशीतिभिश्च देवतासहस्रैर्[२] अनेकैश्च माणवकैर्[३] ब्राह्मणगृहपति-सहस्रैः[४]। अस्मिन् प्रदेशे भगवता शक्रस्य देवेन्द्रस्य धर्मो देशितः। [५]शक्रेण च सत्यानि दृष्टानि चतुरशीतिभिश्च देवतासहस्रैः[६]। अस्मिन् प्रदेशे महाप्रातिहार्यं विदर्शितं। अस्मिन् प्रदेशे भगवान् देवेषु[७] त्रयस्त्रिंशेषु वर्षा उषित्वा[८] मातुर्जनयित्र्या धर्मं देशयित्वा देवगण-परिवृतः[९] अवतीर्णः[१०]। विस्तरेण यावत् स्थविरो राजानमशोकं कुशिनगरीमुपनामयित्वा दक्षिणं करतलमभिप्रसार्योवाच। अस्मिन् प्रदेशे महाराज भगवान्[११] सकलं बुद्धकार्यं कृत्वा निरुपधिशेषे[१२] निर्वाण-धातौ परिनिर्वृतः। [१३]आह च।

लोकं सदेवमनुजासुरयक्षनागमक्षय्यधर्मविनये मतिमान् विनीय।
वैनेयसत्त्वविरहादु[१४]पशान्तबुद्धिः शान्तिं गतः परमकारुणिको महर्षिः[१५]॥

श्रुत्वा च राजा मूर्च्छितः[१६] पतितः[१७]। यावज् जलपरिषेकं कृत्वोत्थापितः। अथ राजा कथंचित् संज्ञामुपलभ्य परिनिर्वाणे शतसहस्रं दत्त्वा चैत्यं प्रतिष्ठाप्य[१८] पादयोर्निपत्योवाच। स्थविर[१९] अयं मे मनोरथो ये च भगवता श्रावका अग्रतायां निर्दिष्टास्तेषां शरीरपूजां[२०] करिष्यामीति। स्थविर उवाच। साधु साधु महाराज। [२१]शोभनस्ते चित्तोत्पादः[२२]। स्थविरो राजानमशोकं जेतवनं प्रवेशयित्वा दक्षिणं करमभिप्रसार्योवाच। अयं महाराज स्थविरशारिपुत्रस्य स्तूपः। क्रियतामस्यार्चनमिति। राजाह। के तस्य गुणा बभूवुः। स्थविर उवाच। [२३]स हि द्वितीयशास्ता धर्मसेनापतिर्धर्मचक्रप्रवर्तनः[२४] प्रज्ञावतामग्रो निर्दिष्टो भगवता।

सर्वलोकस्य या प्रज्ञा स्थापयित्वा तथागतं।
शारिपुत्रस्य प्रज्ञायाः कलां नार्हति षोडशीं॥

[1]आह च।

सद्धर्मचक्रमतुलं यज्[2]जिनेन प्रवर्तितं।
अनुवृत्तं हि तत्[2] तेन शारिपुत्रेण धीमता[3]॥
कस्तस्य साधु बुद्धादन्यः[4] पुरुषः शारद्वतस्येह।
ज्ञात्वा[5] गुणगणनिधिं वक्तुं शक्नोति निरवशेषात्॥

ततो राजा प्रीतमनाः स्थविरशारद्वतीपुत्रस्तूपे शतसहस्रं दत्त्वा कृताञ्जलिरुवाच[7]।

शारद्वतीपुत्रमहं भक्त्या वन्दे[8] विमुक्तभवसङ्गं[9]।
लोकप्रकाशकीर्तिं[10] ज्ञानवतामुत्तमं वीरं[11]॥

यावत् स्थविरोपगुप्तः स्थविर[12]महामौद्गल्यायनस्य स्तूपमुपदर्शयन्नुवाच। अयं[13] महाराज स्थविर[12]महामौद्गल्यायनस्य स्तूपः[14]। क्रियतामस्यार्चनमिति। राजाऽह। के तस्य गुणा बभूवुरिति। स्थविर उवाच। स हि ऋद्धिमतामग्रो निर्दिष्टो भगवता येन दक्षिणेन पादाङ्गुष्ठेन[15] शक्रस्य देवेन्द्रस्य वैजयन्तः[16] प्रासादः प्रकम्पितो नन्दोपनन्दौ नागराजानौ[17] विनीतौ। [18]आह च।

शक्रस्य येन भवनं पादाङ्गुष्ठेन कम्पितं।
पूजनीयः प्रयत्नेन कोलितः स द्विजोत्तमः॥
भुजगेश्वरौ प्रतिभयौ दान्तौ येनातिदुर्दमौ[19] लोके।
कस्तस्य शुद्धबुद्धेः[20] पारं गच्छेद् गुणार्णवस्य॥

यावद् राजा महामौद्गल्यायनस्य स्तूपे शतसहस्रं दत्त्वा कृताञ्जलिरुवाच[21]।

---

1–3Chl omits. 2MSS. *taṁ*. 4MSS. *buddhānyaḥ*. 4–5Chl *saṁkṣepād vinā*. 6Chl "Adoring Śāriputra he recited this *gāthā*:" 7–8Chl omits. 9Chl °*saṅgaḥ saḥ*. 10Chl °*prapūrṇakīrtir*. 11Chl °*ttamo vīraḥ*. 12Chl omits *mahā*. 13MSS. *idaṁ*. 14MSS. °*paṁ*. 15Chl *pādena*. 16Chl omits. 17 = *rājau*. 18–19Chl "I said it briefly." 19MSS. add *tau* after *dāntau*. 20Chl *vai vacobhiḥ*. 21Chl *gāthāṁ babhāṣe*.

स्थविर उवाच। स महात्माऽल्पबाधानाम् अग्रो[1] निर्दिष्टो भगवता। अपि च न तेन कस्यचिद् द्विपदिका[2] गाथा श्राविता। राजाऽह्। दीयतामत्र काकणिः[3]। यावदमात्यैरभिहितः। देव किमर्थं तुल्येष्ववस्थितेष्वत्र काकणी दीयत इति। राजाऽह्। [4]श्रूयतामत्राभिप्रायो मम।

आज्ञाप्रदीपेन मनोगृहस्थं हृतं तमो यद्यपि तेन कृत्स्नं।
[5]अल्पेच्छभावान्न कृतं हि तेन यथा कृतं सत्त्वहितं तदन्यैः[6]॥

सा प्रत्याहृता तस्यैव राज्ञः पादमूले निपतिता[7]। यावद् अमात्या विस्मिता[8] ऊचुः। अहो तस्य महात्मनोऽल्पेच्छता। बभूवानयाप्यनर्थी।

यावत् स्थविरोपगुप्तः स्थविरानन्दस्य स्तूपमुपदर्शयन्नुवाच। अयं[9] स्थविरानन्दस्य स्तूपः[10]। क्रियतामस्यार्चनमिति। राजाऽह्। के तस्य गुणा बभूवुरिति। स्थविर उवाच। [11]स हि भगवत उपस्थायको बभूव। बहुश्रुतानामग्र्यो प्रवचनग्राहकश्चेति। आह च[12]।

मुनिपात्र[13]रक्षणपटुः [14]स्मृतिधृतिमतिनिश्चितः श्रुतसमुद्रः[15]।
विस्पष्ट[16]-मधुरवचनः सुरनरमहितः सदानन्दः[17]॥
सम्बुद्धचित्तकुशलः सर्वत्र[18] विचक्षणो[18] गुणकरण्डः।
जिनसंस्तुतो जितरणः सुरनरमहितः सदानन्दः[19]॥

---

[1]Chl *bādhāhīnānām alpecchānāṁ cāgro* ("best of those who are free from failings and who have only a little desire"). [2]Chl "Never did he instruct people a *gāthā* of a quarter *pāda* (*ekapādikā gāthā*)." Ch2 "Never did he speak to people one or two *pādas* of the Law (*ekapādo dvipādo vā dharmo bhāṣitaḥ*)." [3]Chl reads: "a piece of gold". [4–6]Chl "Because he has liberated himself (alone) and not others. And hence I give him only a single piece (of gold)." [5]A *ahanyebhāvān*. [6–7]Chl "The spirit in the *stūpa* refused (it) and returned (the piece) to the king." [7]CD °*tāḥ*. [8]Chl omits it. [9]MSS. *imaṁ*. [10]MSS. *stūpaṁ*. [11–12]Chl "Tathāgata has designated him as the best of those who preserved (Dharma) in its totality." [13]Chl °*dharma*°. [14–15]Chl "The strength of his mind (*lit* thought), his wisdom and the extent of his knowledge (*śruti bahuśruti*) were comparable to the ocean." [16]Chl "marvellous" [17]Chl omits. [18]Chl "He was perfectly good and full of merits." [18–19]Chl "He was the casket confining the multitude of *dharmas*."

[1]यावद् राजा तस्य स्तूपे कोटिर्दत्ता। यावद् अमात्यैरभिहितः। [2]किमर्थमयं देव सर्वेषां सकाशादधिकतरं पूज्यते[3]।

राजाह। श्रूयतामभिप्रायः[4]।

यत्तच्छरीरं वदतां[5] वरस्य[6] धर्मात्मनो धर्ममयं विशुद्धं[7]।
तद् धारितं तेन[8] विशोकनाम्ना तस्माद् विशेषेण स पूजनीयः[9]॥
धर्मप्रदीपो ज्वलति प्रजासु क्लेशान्धकारान्तकरो[10] यदद्य।
तत् तत्प्रसादात् [11]सुगतेन्द्रसूनोस्तस्माद् विशेषेण स पूजनीयः[11]॥
यथा सामुद्रं[12] सलिलं समुद्रैर्धार्यते कश्चिन्[13] न हि गोष्पदेन।
नाथेन तद्धर्ममवेक्ष्य भावं सूत्रान्तकोऽयं स्थविरोऽभिषिक्तः[14]॥

अथ राजा स्थविराणां स्तूपार्चनं कृत्वा स्थविरोपगुप्तस्य पादयोर्निपत्य प्रीतिमना उवाच[15]।

मानुष्यं सफलीकृतं क्रतुशतैरिष्टेन यत्[16] प्राप्यते
राज्यैश्वर्यगुणैश्चलैश्च विभवैः सारं गृहीतं परं।
लोकं चैत्यशतैरलङ्कृतमिदं श्वेताभ्रकूटप्रभैः
अस्याद्याप्रतिमस्य शासनकृते[17] किं नो[18] कृतं दुष्करं॥ इति॥

यावद् राजा स्थविरोपगुप्तस्य[1] प्रणामं कृत्वा प्रक्रान्तः।

[2]यावद् राज्ञाऽशोकेन जातौ बोधौ धर्मचक्रे परिनिर्वाणे एकैक-शतसहस्रं[3] दत्तं। तस्य बोधौ विशेषतः प्रसादो जात[4] इह भगवताऽनुत्तरा सम्यक्सम्बोधिरभिसम्बुद्धेति। स यानि विशेषयुक्तानि रत्नानि तानि बोधिं प्रेषयति।

अथ राज्ञोऽशोकस्य तिष्यरक्षिता नामाग्रमहिषी। तस्या बुद्धिरुत्पन्ना। [5]अयं राजा मया सार्धं रतिमनुभवति[6] विशेषयुक्तानि च[7] रत्नानि बोधौ प्रेषयति[8]। तया [9]मातङ्गी व्याहरिता। शक्यसि[10] त्वं बोधिं मम सपत्नीं प्रघातयितुं[11]। तयाऽभिहितं। शक्ष्यामि किन्तु कार्षापणान् देहीति[12]।

यावन् मातङ्ग्या बोधिवृक्षो मन्त्रैः परिजप्तः[13] सूत्रं च बद्धं[14]। यावद् बोधिवृक्षः [15]शोष्टुमारब्धः। ततो राजपुरुषै राज्ञे निवेदितं। देव बोधिवृक्षः शुष्यत[16] इति। आह च।

यत्रोपविष्टेन तथागतेन कृत्स्नं जगद्बुद्धमिदं यथावद्[17]।
सर्वज्ञता चाधिगता नरेन्द्र बोधिद्रुमोऽसौ निधनं प्रयाति ॥

श्रुत्वा च राजा मूर्च्छितो भूमौ पतितः। यावज् जलसेकं दत्त्वा[18] उत्थापितः। अथ राजा कथंचित् संज्ञामुपलभ्य प्ररुदन्नुवाच।

दृष्ट्वा न्वहं तं द्रुमराजमूलं जानामि दृष्टोऽद्य मया स्वयम्भूः।
नाथद्रुमे चैव गते प्रणाशं प्राणाः प्रयास्यन्ति ममापि नाशं ।

[1]Chl *yāvad rājā tā gāthā bhāṣitvā daṇḍavat.* [2]According to Ch2, here begins another Avadāna called: "Offerings to the Bodhi-tree (*bodhivṛkṣārcanaṁ nāmā'vadānaṁ*)." [3]Chl *ekaikasya stūpe śatasahasraṁ kārṣāpaṇaṁ* ("a hundred thousand pieces of gold"). [4]MSS. *prasāda-jāta*. Chl "He respected more the *stūpa* of the Bodhi-tree." [5–6]Chl omits. [7]MSS *°yuktāṁś ca*. Chl "the beautiful jewels". [8]Chl adds: *mahyaṁ na dadāti*. [9]Chl *caṇḍāla(li)mātaṅga(gī)*. Ch2: "a Caṇḍāla woman (*caṇḍālī*)". [10]AB *śekyasi*. [10–11]Chl "Can you do her harm, by spell, for my sake ?" [11]MSS. *°ghātituṁ*. [12]Chl adds: "She promised to give her *kārṣāpaṇa*. The Mātaṅga(gī) did not disclose her intentions." [13]Chl *vṛkṣe mantraḥ parijaptaḥ*. [14]Chl adds: "with an intention to destroy it, by incantations". [15]MSS. *śuṣkitum*. [16]A *śuṣita*. [17]Chl "And he attained to the Way of Bodhi." [18]Chl adds: "after a long time". MSS. *jala-ṣekaṁ da°*.

चतुर्दिशमायाचितु[1]मारब्ध:[2]। ये भगवतो बुद्धस्य श्रावकास्ते ममानु-ग्रहायागच्छन्तु।

अपि च[2]।

सम्यग्गता[3] ये सुगतस्य शिष्या: [4]शान्तेन्द्रिया निर्जितकामदोषा:।
सम्माननार्हा नरदेवपूजिता[5] आयान्तु तेऽस्मिन्ननुकम्पया मम ।।
[6]प्रशमदमरता विमुक्तसङ्गा: प्रवरसुता: सुगतस्य धर्मराजा:।
असुरसुरनरार्चितार्य[7]वृत्तास्त्विह मदनुग्रहणात् समभ्युपेयु:[8] ।।
वसन्ति काश्मीरपुरे सुरम्ये[9] ये चापि धीरास्तमसोवनेऽस्मिन्[10]।
महावने रेवतके य[11] आर्या अनुग्रहार्थं मम तेऽभ्युपेयु: ।।
अनवतप्त[12]ह्रदे निवसन्ति ये गिरिनदीषु च पर्वतकन्दरे[13]।
जिनसुता: खलु ध्यानरता: सदा [14]समुदयन्त्विह तेऽद्य कृपाबला:[15] ।।
शैरीषके ये प्रवरे विमाने वसन्ति पुत्रा वदतां वरस्य[16]।
अनुग्रहार्थं मम ते विशोका ह्यायान्तु कारुण्यनिविष्टभावा:[17] ।।
गन्धमादनशैले च ये वसन्ति महौजस:[18]।
इहायान्तु[19] हि कारुण्यमुत्पाद्योपनिमन्त्रिता:[19] ।।

---

[1–2]Chl °*diśam ālokayitum ārabdhaḥ. āha ca.* [3]Chl °*dṛśo* ("You who practise the right view or *samyag-dṛṣṭi*"). [4]Chl [*kuśala-*] *mūlaiś ca dhyānair jitakāma*° ("by your 'roots' and meditation..."). [5]Chl *nara-deva-dānava*°. [7]ACD °*ācitārya*°, B °*āritārya*°. [6–8]Chl "You all who have taken delight in *dhyāna* and ecstasy (*dhyāna-samādhiratāḥ*), and have attained to wisdom, members of the Saṅgha who have (attained to) deliverance, true and incomparable sons who have got a new life in the Law of Sugata, accept my invitation in compassion (for me)." [8]B °*bhyupentu*, C°*pantu*, rest °*bhyupaintu*. [9–10]Chl "those who are free from fear day and night." Ch2 mentions Tāmasavana after Mahāvana. Chl omits Tāmasavana. [10]MSS. °*stamasā*°. [11]MSS. °*take raye 'ryā*. Chl "Saints of Mahāvana and...". [12]Ch read "Anava" for Anavatapta. Chl "Those who live in the precipitous neighbouring places of the great lake...." [13]MSS. °*ṣu saparvatakandareṣu.* [14]MSS. *samudayā*°. [15]Chl omits this line. [16]Chl "Those who live in the grottoes of the *chö-li.*" Ch2 "Those who live in the palace of *chö-li-cha.*" D *śerīṣake.* [17]Chl omits this line. [18]Chl "Those who live on the mounts of perfume (Gandha-mādana)." [19]Chl *lit.* "In compassion, accept my invitation." MSS. omit *hi.*

एवमुक्ते च राज्ञि[1] त्रीणि शतसहस्राणि भिक्षूणां संनिपतितानि। तत्रैकं शतसहस्रमर्हतां द्वे शैक्षाणां[2] पृथग्जनकल्याणकानां च[3]। न कश्चिद् वृद्धासनमाक्रम्यते स्म। राजाऽह। किमर्थं वृद्धासनं तन् नाक्रम्यते। तत्र यशो नाम्ना वृद्धः षडभिज्ञः[4]। स उवाच। महाराज वृद्धस्य तदासनमिति। राजाऽह। अस्ति स्थविर त्वत्सकाशादन्यो वृद्धतर इति। स्थविर उवाच। अस्ति महाराज। वदतां[5] वरेण[6] वशिना[7] निर्दिष्टः सिंहनादिनामग्र्यः। पिण्डोलभरद्वाजस्यैतद्[8] अग्रासनं नृपते[9]।

अथ राजा कदम्बपुष्पवदाहृष्टरोमकूपः[8] कथयति। अस्ति कश्चिद् बुद्धदर्शी भिक्षुर्ध्रियत इति[9]।

स्थविर उवाच। अस्ति महाराज पिण्डोलभरद्वाजो[10] नाम्ना बुद्धदर्शी तिष्ठत इति।

राजा कथयति। स्थविर, शक्यः सोऽस्माभिर्द्रष्टुमिति। स्थविर उवाच। [11]महाराज इदानीं द्रक्ष्यसि। अयं तस्य आगमनकाल इति[12]। अथ राजा प्रीतिमना उवाच।

लाभः परः स्याद् अतुलो[13] ममेह महासुखश्चाय[14]मनुत्तमश्च।
पश्याम्यहं यत्तमुदारसत्त्वं साक्षाद् भरद्वाजसगोत्रनाम[15]॥

ततो राजा कृतकरपुटो गगनतलावसक्तदृष्टिरवस्थितः। अथ[16] स्थविरपिण्डोलभरद्वाजोऽनेकैरर्हत्सहस्रैरर्धचन्द्राकारेणोपगूढो राजहंस

इव गगनतलादवतीर्यं वृद्धान्ते निषसाद। स्थविरपिण्डोलभरद्वाजं दृष्ट्वा तान्यनेकानि भिक्षुशतसहस्राणि प्रत्युपस्थितानि[१]।

अद्राक्षीद् राजा पिण्डोलभरद्वाजं श्वेतपलित[२]शिरसं प्रलम्बभ्रूललाटं[३] निगूढाक्षितारकं प्रत्येकबुद्धाश्रयं[४]। दृष्ट्वा च राजा मूलनिकृत्त[५] इव द्रुमः[६] सर्वशरीरेण स्थविरपिण्डोलभरद्वाजस्य पादयोः पतितः। मुखतुण्डकेन च पादावनुपरिमार्ज्योत्थाय तौ[७] जानुमण्डलौ पृथिवीतले प्रतिष्ठाप्य[८] कृताञ्जलिः स्थविरपिण्डोलभरद्वाजं निरीक्षमाणः प्ररुदन्नुवाच।

यदा मया शत्रुगणान् निहत्य प्राप्ता समुद्राभरणा सशैला।
एकातपत्रा पृथिवी तदा मे प्रीतिर्न सा या[९] स्थविरं निरीक्ष्य[१०]॥

त्वद्दर्शनाद्[११] भवति दृष्टोऽद्य तथागतः। करुणालाभात् त्वद्दर्शनाच्च द्विगुणप्रसादो ममोत्पन्नः[१२]। अपि च स्थविर दृष्टस्ते त्रैलोक्यनाथो[१३] गुरुर्मे भगवान् बुद्ध इति[१४]। ततः स्थविरपिण्डोलभरद्वाज उभाभ्यां पाणिभ्यां [१५]भ्रुवमुन्नाम्य राजानमशोकं निरीक्षमाण उवाच।

दृष्टो मया ह्यसकृदप्रतिमो महर्षिः[१६]
सन्तप्तकाञ्चनसमोपमतुल्यतेजः[१७]।
द्वात्रिंश[१८]लक्षणधरः शरदिन्दुवक्त्रो[१९]
ब्राह्मस्वराधिकरणो ह्यरणाविहारी[२०]॥

---

similar to a demilune and to the king of cranes accompanied by several thousands of myriads of Arhat descended. He came to take his seat, in front of the Sthaviras. The assistants numbering three lakhs all got up and paid homage to him."

[1]Chl: *cf.* above. [2]AB °*parita*°. [3]Chl reads: "eye-brows thick". [3-4]Chl "whose body showed (auspicious) marks and submarks of a Pratyeka°." [5]MSS. °*nikṛnta*°. [5-6]Chl omits. [7-8]Chl "He kneeled down after the manner of the *hu*." [8-10]Chl "Then he recited this *gāthā*: 'Although Tathāgata has entered into Nirvāṇa, you fill his office (*śāntiṁ gate tathāgate tvaṁ buddhakāryaṁ kuruṣe*). You are living, O Venerable, in compassion for me; give me your instruction which I shall follow (*lit.* I shall conform my conduct).'" [9]MSS. *me*; *cf.* p. 78. last line. [11-12]Chl "Having recited this *gāthā*, the king asked the Venerable:" [13-14]Chl *tathāgataḥ*. [15]MSS. *bhuva*°. [14-16]Chl *sa uvāca. dṛṣṭo mayā'sau*. [16-17]Chl *kāñcanastūpatulya-varṇaḥ*. [18]MSS. °*triṁśallakṣa*°. [19]Chl *sakalendu*°. [19-20]Chl "His voice

राजाऽह। स्थविर कुत्र ते भगवान् दृष्टः 'कथं चेति[1]। स्थविर उवाच। यदा महाराज भगवान् विजितमारपरिवारः[2] पञ्चभिरर्हच्छतैः सार्धं प्रथमतो राजगृहे वर्षामुषितोऽहं तत्कालं तत्रैवासम्[3]। मया[3] स दक्षिणीयः सम्यग् दृष्ट इति। आह च[4]।

वीतरागैः परिवृतो वीतरागो महामुनिः।
यदा राजगृहे वर्षा उषितः स तथागतः॥
तत्कालमासं[5] तत्राहं सुबुद्धस्य तदन्तिके।
यथा पश्यसि मां साक्षादेवं दृष्टो मया मुनिः[6]॥

यदापि महाराज भगवता श्रावस्त्यां तीर्थ्यान् विजयार्थं महाप्रातिहार्यं कृतं बुद्धावतंसकं यावदकनिष्ठभवनं[7] निर्मितं महत् तत्कालं तत्रैवाहमासम्[8]। मया तद् बुद्धविक्रीडितं दृष्टमिति। आह च[9]।

तीर्थ्या[10] यदा भगवता कुपथप्रयाता
ऋद्धि[11]प्रभावविधिना खलु निर्गृहीताः।
विक्रीडितं दशबलस्य तदा ह्युदारं
दृष्टं मया तु नृप हर्षकरं प्रजानां॥

यदापि महाराज भगवता देवेषु त्रयस्त्रिंशेषु वर्षा[12] उषित्वा[12] मातुर्जनयित्र्या धर्मं देशयित्वा देवगणपरिवृतः सांकाश्ये[13] नगरेऽवतीर्णोऽहं तत्कालं तत्रैवासम्। [14]मया सा देवमनुष्यसंपदा दृष्टा उत्पलवर्णया च निर्मिता चक्रवर्तिसंपदा इति।

---

(similar to that of) Brahmā was profound and marvellous. The great Compassionate One had a cave for his dwelling."

[1]Chl omits. [2]MSS. *varṣām upagato.* Chl *lit.* "While he was in his festival residence." [3]MSS. °*vāsan mayā.* [3–4]Chl "I saw the field of merit prosper (*kṣetrasya vipāko mayā dṛṣṭaḥ*)." [5]AC °*māsan.* [1–6]Chl omits. [7]ABC °*bhagavanaṁ.* [8]MSS. °*māsan.* [6–9]Chl "In the kingdom of Śrāvastī, when he showed the great supernatural transformations to subdue the heretics: (when) by charm, he made Buddhas appear who were magnificently adorned and who formed a series that rose up to the heaven of Akaniṣṭha, then again, I was there." [10]Chl omits this *śloka.* [11]ABC *riddh*°. [12]Chl omits. [13]MSS. *saṅkāśye.* [14]MSS. °*vāsan mayā.* Chl: *cf.* p. 99.

यदावतीर्णो वदतां वरिष्ठो वर्षामुषित्वा खलु देवलोके।
तत्राप्यहं सन्निहितो बभूव दृष्टो मयाऽसौ मुनिरग्रसत्त्वः[1] ॥

यदा महाराज सुमागधया अनाथपिण्डदुहित्रा[2] उपनिमन्त्रितः पञ्चभिरर्हच्छतैः सार्धमृद्धया[3] पुण्डवर्धनं[3] गतस्तदाहं ऋद्धया पर्वतशैलं ग्रहाय गगनतलमाक्रम्य[4] पुण्डवर्धनं गतः। [5]त्वन्निमित्तं च मे भगवताऽज्ञा क्षिप्ता। न तावत्ते परिनिर्वातव्यं यावद्धर्मो नान्तर्हित इति। आह च।

यदा जगामर्द्धिबलेन नायकः सुमागधायोपनिमन्त्रितो गुरुः।
तदा गृहीरवर्द्धिबलेन पर्वतं[6] जगाम तूर्णं खलु पुण्डवर्धनं ॥
आज्ञा तदा शाक्यकुलोदितेन दत्ता च मे कारुणिकेन[7] तेन।
तावन्न ते निर्वृति[8]रभ्युपेया अन्तर्हितो यावदयं न धर्मः[9] ॥

यदापि महाराज त्वया पूर्वं बालभावाद्[10] भगवतो राजगृहं पिण्डाय प्रविष्टस्य सक्तुं[10] दास्यामीति[10] पांश्वञ्जलिर्भगवतः पात्रे प्रक्षिप्तो राधगुप्तेन[11] चानुमोदितं त्वं[12] च भगवता निर्दिष्टोऽयं दारको वर्षशतपरिनिर्वृतस्य मम पाटलिपुत्रे नगरेऽशोको नाम राजा भविष्यति चतुर्भागचक्रवर्ती धार्मिको धर्मराजा[13] यो मे शरीरधातुकं वैस्तारिकं[14] करिष्यति चतुरशीतिधर्मराजिकासहस्रं प्रतिष्ठापयिष्यत्यहं तत्कालं तत्रैवासम्[15]। आह च।

यदा पांश्वञ्जलिर्दत्तस्त्वया बुद्धस्य भाजने।
बालभावात् प्रसादित्वा तत्रैवाहं तदाऽभवम्[16] ॥

---

[1]Chl "When the Bhikṣuṇī Utpalā (Chl "lotus-flower," Ch2 "Utpalavarṇikā") transformed herself magically into a Cakravartin king (*cakravarti-sampadā nirmitā*) and when her (his) thousand sons all prostrated themselves at the feet of Buddha, I was also there." [2]Chl omits *anātha*°, and adds: *pūrṇavardhane buddha*. [3]Chl "Everyone showing supernatural transformations arrived at the town of Pūrṇavar° ("full riches")." [3–4]Chl "On that occasion, I transformed myself magically, so as to be seated in a grotto of jewels of a jewel-mountain." [5]MSS. *tannimittaṁ ca ye*. [6]MSS. *śailaṁ*. [6–9]Chl omits. [7]MSS. *kāruṇikara*. [8]ABC *nirvṛtti*°. MSS. °*rābhyu*°. [10]Chl omits. [11]Chl adds: *kṛtāñjalinā*. [12–16]Chl simply reads: "At the moment when Buddha made a prophecy about you, I could see him as well." [13] = *rājo*. [14]MSS. °*kām*. [15]MSS. °*vāsīt*. [16]MSS. °*bhuvan*.

राजाऽह। शतसहस्रत्रयं दास्यामीत्यार्यसङ्घे। कुम्भसहस्रेण च बोधिं स्नपयिष्यामि। [1]मम नाम्ना घुष्यतां पञ्चवार्षिकमिति[2]।

यावत्[3] कुनालेन चतस्रोऽङ्गुलय उत्क्षिप्ता। ततो राजा रुषितो[4] राधगुप्तमुवाच। अहो राधगुप्त कोऽयमस्माभिः सार्धं प्रतिद्वन्द्वयति अलोकज्ञः।

रुषितं[5] च राजानमवेक्ष्य[6] राधगुप्तो राज्ञः[6] पादयोर्निपत्योवाच[7]। देव कस्य शक्तिर्नरेन्द्रेण सार्धं विस्पर्धितुं भवेत्। [8]कुनालो गुणवान् पित्रा सार्धं विकुरुते[9]। अथ राजा दक्षिणेन परिवृत्य कुनालमवलोक्योवाच। स्थविर अहं कोशं स्थापयित्वा[10] राज्यमन्तःपुरममात्यगणमात्मानं च कुनालं [11]चार्यसङ्घे निर्यातयामि[12]। सुवर्णरूप्यस्फटिकवैडूर्यमयैः[13] पञ्चकुम्भसहस्रै[14]र्नानागन्धपूर्णैः[15] क्षीरचन्दनकुंकुमकर्पूरवासितैर्महाबोधिं स्नपयिष्यामि। पुष्पशतसहस्राणि च बोधिप्रमुखे चार्यसङ्घे ददामि[16]। मम नाम्ना घुष्यतां पञ्चवार्षिकमिति। [17]आह च।

राज्यं समृद्धं हि[18] संस्थाप्य कोशमन्तः[19]पुरामात्यगणं च सर्वं।
ददामि सङ्घे गुणपात्रभूते आत्माकुनालं च गुणोपपन्नं[20]॥

ततो राजा पिण्डोलभरद्वाजप्रमुखे भिक्षुसङ्घे निर्यातयित्वा[21] बोधिवृक्षस्य च चतुर्दिशं वारं बद्ध्वा स्वयमेव च वारमभिरुह्य चतुर्भिः कुम्भसहस्रै[22]र्बोधिस्नपनं कृतवान्। [23]कृतमात्रे च बोधिस्नपने बोधिवृक्षो यथापौराणः संवृत्तः। वक्ष्यति[24] हि।

---

[1–2]Ch1 omits. [2]MSS. °*varṣi*°. [3]Ch1 *tataḥ punaḥ*. [4]Ch1 omits. [5]Ch1 omits. [6–7]Ch1 "having kneeled down replied." [8–9]Ch1 "Kunāla is a child. It is a little boy who plays with his father." [9]MSS °*kurva*°. [10]Ch1 "I shall use up my treasure;" it omits *rājyaṁ*. Ch2 agrees with the text which reads: "the king reserves his treasure." MSS. *sthaviro'haṁ kośaṁ sthāpa*°. [11]Ch1 adds: "and others". [11–12]MSS. omit. [13]MSS. °*mayānāṁ*. [14]MSS. °*hasrāṇi nānā*°. [15]MSS. °*pūrṇāni*. [13–16]Ch1 omits. [17]MSS. °*varṣikam iti*. [18]MSS. omit it. [17–20]Ch1 omits. [19]MSS. °*śam antaḥpurāṇi ca amā*°. [20]=*ātmakunā*° or *ātmānaṁ ku*°. [20–21]Ch1 "When the donation was made, when the monks had expressed their desires and when the desires (thus) expressed were approved, the king...". [22]Ch1 "with four thousand precious vases filled with a perfumed fluid". [23–24]Ch1 omits. [24]A *cakṣyati*°. B *vakṣyeti*°.

राजाऽह। स्थविर। कुत्रेदानीमुष्यत इति। स्थविर उवाच।

उत्तरे[1] सरराजस्य[1] पर्वते गन्धमादने।

वसामि नृपते[2] तत्र सार्धं सब्रह्मचारिभि:[3] ।।

राजाऽह। कियन्त: स्थविरस्य परिवारा:। स्थविर उवाच।

षष्ट्यर्हन्त: सहस्राणि परिवारो नृणां वर।

वसामि[4] यैरहं सार्धं निष्पृहैर्जितकल्मषै:[5] ।।

[6]अपि च महाराज किमनेन सन्देहेन कृतेन[7]। परिविष्यतां भिक्षुसङ्घ:। [8]भुक्तवतो भिक्षुसङ्घस्य प्रतिसंमोदनं करिष्यामि[9]। राजाऽह। एवमस्तु यथा स्थविर आज्ञापयति। किन्तु बुद्धस्मृतिप्रतिबोधितो[10]ऽहं बोधिस्नपनं तावत् करिष्यामि। समनन्तरं च मनापेन[11] चाहारेण भिक्षुसङ्घमुपस्थास्यामीति।

अथ राजा सर्वमित्रम् [12]उद्घोषकमामन्त्रयति। अहम् आर्यसङ्घस्य शतसहस्रं दास्यामि। कुम्भसहस्रेण[13] च बोधिं स्नापयिष्यामि। मम नाम्ना घुष्यतां पञ्चवार्षिकमिति।

तत्कालं[14] च कुनालस्य नयनद्वयमविपन्नमासीत्। स[15] राज्ञो दक्षिणे पार्श्वे स्थित:। तेनांगुलिद्वयमुत्क्षिप्तं न तु वाग् भाषिता। द्विगुणं त्वहं प्रदास्यामीत्याकारयति। पाणौ[16] वर्धितमात्रे च कुनालेन सर्वजनकायेन हास्यं मुक्तं।

ततो राजा हास्यं मुक्त्वा कथयति। अहो राधगुप्त केनैतद् वर्धितमिति।

राधगुप्त: कथयति। [17]देव वहव: पुण्यार्थिन: प्राणिनो य: पुण्यार्थी तेन वर्धितमिति[18]।

---

[1]Chl omits. [2–3]Chl omits. [4–5]Chl omits the whole line. [6–7]Chl *alaṁ tāvan mahārāja kim etaiḥ praśnaiḥ.* [8–9]Chl "After repast, I shall complete my narrative for the sake of the king." [10]Chl "Having produced in me the thought of meditation on Buddha". [11]Chl omits. [12]Chl *wei-na.* [13]Chl "with a thousand precious vases full of perfumed fluid". [14–15]Chl *rājñaḥ putraḥ kunālo.* [16]MSS. *pāṇinā.* [17–18]Chl "Among the multitude of human beings, numerous are they who are eager for (achieving) merit."

श्रुत्वा च राज्ञः प्रीतिमनसो वुद्धिरुत्पन्ना। तौ[1] श्रामणेरावागम्य[2] भिक्षुसङ्घं[3] पटेनाच्छादयिष्यामि। ततस्तौ श्रामणेरौ राज्ञोऽभिप्रायमवगम्य[4] भूयोऽन्येऽस्माभिः स्वगुणा उद्भावयितव्या इति[5] [चिन्तितौ]। तयोरेकेन कटाहका उपस्थापिता द्वितीयेन रङ्गः समुदानीतः।

राज्ञा पृष्टौ[6] श्रामणेरकौ। किमिदमारब्धं[7]। तयोरभिहितं। देवो[8]ऽस्माकमागम्य भिक्षुसङ्घं पटेनाच्छादितुकामः[9]। तान् पटान् रञ्जयिष्यामः।

श्रुत्वा च राज्ञो वुद्धिरुत्पन्ना। मया[10] केवलं चिन्तितं न तु वाङ निश्चारिता। परचित्तविदावेतौ महात्मानौ[11]। ततः सर्वशरीरेण पादयोर्निपत्य कृताञ्जलिरुवाच।

मौर्यः[12] सभृत्यः सजनः सपौरः
सुलब्धलाभार्यसुयष्टयज्ञः।
यस्येदृशः साधुजन[13]प्रसादः
काले तथोत्साहि करोति दानं[14]॥

यावद् राज्ञाऽभिहितं। युष्माकमागम्य [15]त्रिचीवरेण भिक्षुसङ्घमाच्छादयिष्यामीति। ततो राजाऽशोकः पञ्चवार्षिके[16] पर्यवसिते [17]सर्वभिक्षून् [18]त्रिचीवरेणाच्छाद्य[18] चत्वारि शतसहस्राणि [19]सङ्घस्या-

---

[1–2]Chl omits. [3]Chl adds here: *pratyekam ekena sūkṣmeṇa*. Ch2 reads: "I have made offering to the Saṅgha. Further, I am going to have good dresses and offer them to these two *śrāmaṇeras*." [4]C *abhigamya*. [4–5]Chl "reflected thus: 'Now we are going to do so that the king may redouble his faith and respect.'" [6]MSS. *dṛṣṭau*. [7]Chl *lit*. "What do you wish to do?" [8]MSS. °*smākam avagamya*. [8–9]Chl "Because of us the king wishes to offer a piece of fine cloth to every member of the Saṅgha." [10]A (*kevalaṁ*) *ciñcitaṁ*, B *citaṁ*. [10–11]Chl "'These *śrāmaṇeras* have divined my thought,' the king rejoiced highly." [12–14]Chl "My relations, friends and servants have obtained very great benefit. They have acquired a field of superior merit. Now with all my power I shall give alms." [13]MSS. *jane*. [14]MSS. *kṛtaṁ ca dānaṁ*, ABD omit *ca*. [15]MSS. *tṛci*°. [16]MSS. °*varṣi*°. [17–18]Chl omits. [19]Chl omits.

कृतमात्रे नृपतिना बोधिस्नपनमुत्तमं।
बोधिवृक्षस्तदा जातो हरित्पल्लवकोमलः॥
दृष्ट्वा [1]हरितपत्राढ्यं पल्लवाङ्कुरकोमलं।
राजा हर्षपरं यातः[2] सामात्यगणनैगमः[3]॥

अथ राजा बोधिस्नपनं कृत्वा भिक्षुसङ्घं[4] परिवेष्टुमारब्धः। तत्र यशो नाम्ना स्थविरः। तेनाभिहितं। महाराज महानयं परमदक्षिणीय आर्यसङ्घः संनिपतितः। तथा ते परिवेष्टव्यं यथा तेन क्षतिर्न[5] स्यादिति[6]।

ततो राजा स्वहस्तेन परिवेषयन् यावन् नवकान्तं[7] गतः। तत्र द्वौ श्रामणेरौ संरञ्जनीयं[8] धर्मं[8] समादाय वर्तेते। एकेनापि सक्तवो[9] दत्ता द्वितीयेनापि सक्तवः[9]। एकेन खाद्यका[10] द्वितीयेनापि खाद्यका[10] एव। एकेन मोदका[11] द्वितीयेनापि मोदकाः[11]। तौ दृष्ट्वा राजा हसितः। इमौ श्रामणेरौ बालक्रीडया क्रीडतः[12]।

यावद् राज्ञा भिक्षुसङ्घं परिवेष्य वृद्धान्तमारूढः। स्थविरेण चानुयुक्तः। [13]मा देवेन कुत्रचिद् अप्रसाद उत्पादित इति[13]।

राजाऽह। नेति। अपि तु अस्ति द्वौ श्रामणेरौ बालक्रीडया क्रीडतो[12] यथा[14] बालदारकाः पांश्वागारैः क्रीडन्त्येवं तौ श्रामणेरौ सक्तुक्रीडया क्रीडतः[15] खाद्यक्रीडया [15]क्रीडतः[16]।

स्थविर उवाच। अलं[17] महाराज[17]। उभौ हि तौ उभयतो[18] भागविमुक्तौ[18] अर्हन्तौ।

श्रुत्वा च राज्ञः प्रीतिमनसो वुद्धिरुत्पन्ना। तौ[1] श्रामणेरावागम्य[2] भिक्षुसङ्घं[3] पटेनाच्छादयिष्यामि। ततस्तौ श्रामणेरौ राज्ञोऽभिप्रायमवगम्य[4] भूयोऽन्येऽस्माभिः स्वगुणा उद्भावयितव्या इति[5] [चिन्तितौ]। तयोरेकेन कटाहका उपस्थापिता द्वितीयेन रङ्गः समुदानीतः।

राज्ञा पृष्टौ[6] श्रामणेरकौ। किमिदमारब्धं[7]। तयोरभिहितं। देवो[8]ऽस्माकमागम्य भिक्षुसङ्घं पटेनाच्छादितुकामः[9]। तान् पटान् रञ्जयिष्यामः।

श्रुत्वा च राज्ञो वुद्धिरुत्पन्ना। मया[10] केवलं चिन्तितं न तु वाङ्निश्चारिता। परचित्तविदावेतौ महात्मानौ[11]। ततः सर्वशरीरेण पादयोर्निपत्य कृताञ्जलिरुवाच।

मौर्यः[12] सभृत्यः सजनः सपौरः
सुलब्धलाभार्थसुयष्टयज्ञः।
यस्येदृशः साधुजन[13]प्रसादः
काले तथोत्साहि करोति दानं[14]॥

यावद् राज्ञाऽभिहितं। युष्माकमागम्य [15]त्रिचीवरेण भिक्षुसङ्घमाच्छादयिष्यामीति। ततो राजाऽशोकः पञ्चवार्षिके[16] पर्यवसिते [17]सर्वभिक्षून् [19]त्रिचीवरेणाच्छाद्य[18] चत्वारि शतसहस्राणि [19]सङ्घस्या-

---

[1]–[2]Chl omits. [3]Chl adds here: *pratyekam ekena sūkṣmeṇa.* Ch2 reads: "I have made offering to the Saṅgha. Further, I am going to have good dresses and offer them to these two *śrāmaṇeras.*" [4]C *abhigamya.* [4]–[5]Chl "reflected thus: 'Now we are going to do so that the king may redouble his faith and respect.'" [6]MSS. *dṛṣṭau.* [7]Chl *lit.* "What do you wish to do?" [8]MSS. °*smākam avagamya.* [8]–[9]Chl "Because of us the king wishes to offer a piece of fine cloth to every member of the Saṅgha." [10]A (*kevalaṁ*) *ciñcitaṁ*, B *citaṁ.* [10]–[11]Chl "'These *śrāmaṇeras* have divined my thought,' the king rejoiced highly." [12]–[14]Chl "My relations, friends and servants have obtained very great benefit. They have acquired a field of superior merit. Now with all my power I shall give alms." [13]MSS. *jane.* [14]MSS. *kṛtaṁ ca dānaṁ*, ABD omit *ca.* [15]MSS. *tṛci*°. [16]MSS. °*varṣi*°. [17]–[18]Chl omits. [19]Chl omits.

च्छादनानि[1] दत्त्वा[1] पृथिवीमन्तःपुरममात्यगणमात्मानं च कुनालं च[2] निष्क्रीतवान्[3]। भूयसा भगवच्छासने श्रद्धा प्रतिलब्धा। चतुरशीति-धर्मराजिकासहस्रं[4] प्रतिष्ठापितम्। इति[5]।

[1]Chl omits. MSS. °*naṁ dattvā*. [2–3]Chl "and others; having given all to the Saṅgha, he returned to his palace." Ch2 "He gave four lakhs of *kārṣāpaṇas*. Besides, with innumerable *kārṣāpaṇas* and silver (riches) he bought back the vast earth (*mahāpṛthivī*) . . . . etc." [3–5]Chl "When king Aśoka conceived faith and respect and when he had constructed 84000 *stūpas* completely and held the Pañcavārṣika, the inhabitants of all parts of Jambudvīpa had faith in Buddha and Dharma." [4]MSS. °*srāṇi*.

## कुनालोपाख्यानं

[1]यस्मिन्नेव दिवसे राज्ञाऽशोकेन चतुरशीतिधर्मराजिकासहस्रं[2] प्रतिष्ठापितं तस्मिन्नेव दिवसे[3] राज्ञोऽशोकस्य पद्मावती नाम्ना देवी प्रसूता। पुत्रो जातः अभिरूपो[4] दर्शनीयः प्रासादिको नयनानि चास्य परशोभनानि[5]।

यावद् राज्ञोऽशोकस्य[6] निवेदितं। देव दिष्ट्या[7] वृद्धिर्देवस्य पुत्रो जातः[8]। श्रुत्वा राजा आत्तमनाः[9] कथयति।

प्रीतिः[10] परा मे विपुला ह्यवाप्ता [11]मौर्यस्य वंशस्य परा विभूतिः।
धर्मेण राज्यं मम कुर्वतो हि जातः सुतो धर्मविवर्धनोऽस्तु[12]।।

तस्य धर्मविवर्धन इति नाम कृतं।

यावत् कुमारो राज्ञोऽशोकस्योपनामितः। अथ राजा कुमारं निरीक्ष्य प्रीतमनाः[13] कथयति[14]।

सुतस्य मे नेत्रवरा[15] सुपुण्या सुजातनीलोत्पलसंनिकाशा[16]।
अलङ्कृतं शोभति यस्य वक्त्रं सम्पूर्णचन्द्रप्रतिमं विभाति[17] ।।

यावद् राजाऽमात्यान् उवाच। दृष्टानि भवद्भिः[18] कस्येदृशानि नयनानि। अमात्या ऊचुः। देव मनुष्यभूतस्य न दृष्टानि[19]। अपि तु देव, अस्ति[20] हिमवति पर्वतराजे[21] कुनालो नाम पक्षी प्रतिवसति। तस्य सदृशानि[22] नयनानि। आह[23] च।

---

[1–3]Ch1 omits, Ch2 reads. [2]MSS. °*hasrāṁ*. [4–5]Ch1 reads: *dharma-vivardhano nāma*. [6]Ch1 reads: *ekena amātyena*. [7]MSS. *dṛṣṭvā vṛddhi de°*. [8]Ch1 reads this sentence: "O king, you should rejoice because a son is born to you. The features of his face are uniform and his eyes are incomparable." [9]ACD °*manā*. B *ātmanā*. [10–12]Ch1 reads: "The lineage of the kings who have preceded me is extremely glorious. And now I have been able to give to the Law a prosperity still greater. Lo! A son is born to me." [11]MSS. *ṣaurya°*. [13–14]Ch1 *lit.* "felt a tender affection and recited this *gāthā*:" [15]Ch1 *netrātulā*. [16]Ch1 *navotpalasaṁ°*. [17]Ch1 reads this line as: "His face is gracious, and just like the full-moon; those who look at it become delighted." [18]Ch1 adds: *manuṣyāṇāṁ* or *manuṣyabhūtasya*. [19]Ch1 adds: *na ca śrutāni*. [20]Ch1 *śrutamātraṁ*. [21]Ch1 *parvate*. [22]Ch1 *su°*. [23]Ch1 omits. Ch2 reads.

हिमेन्द्रराजे[१] गिरिशैलशृङ्गे[१] प्रबालपुष्पप्रसवे जलाढ्ये।
कुनालनाम्नेति निवासि[२] पक्षी नेत्राणि तेनास्य समान्यमूनि[३]।।

ततो राज्ञाऽभिहितं। कुनालः पक्षी आनीयतामिति।

तस्योर्ध्वतो योजनं यक्षाः शृण्वन्ति। अधो योजनं नागाः। ततो यक्षैस्तत्क्षणेन कुनालः पक्षी आनीतः। अथ राजा[४] कुनालस्य नेत्राणि सुचिरं निरीक्ष्य न किंचिद् विशेषं पश्यति। ततो राज्ञाऽभिहितं। कुमारस्य कुनालसदृशानि नयनानि[५]। भवतु कुमारस्य कुनाल इति नाम। वक्ष्यति[६] हि।

नेत्रानुरागेण स पार्थिवेन्द्रः सुतं[७] कुनालेति तदा बभाषे।
ततोऽस्य नाम प्रथितं पृथिव्यां तस्यार्यसत्त्वस्य नृपात्मजस्य[८]।।

विस्तरेण यावत् कुमारो महान् संवृत्तः। तस्य काञ्चनमाला नाम[९] दारिका पत्न्यर्थे आनीता।

यावद् राजाऽशोकः कुनालेन सह [१०]कुक्कुटारामं गतः। तत्र यशो[११] नाम्ना सङ्घस्थविरः अर्हन्[१२] षडभिज्ञः[१३]। स पश्यति कुनालस्य न चिरान् नयनविनाशो भविष्यति।

तेन राजाऽभिहितः। किमर्थं कुनालः स्वकर्मणि[१४] न नियुज्यते। ततो[१५] राज्ञाऽभिहितः। कुनाल सङ्घस्थविरो यदाज्ञापयति तत् परिपालयितव्यं[१६]। ततः कुनालः स्थविरस्य[१७] पादयोर्निपत्य[१८] कथयति। स्थविर [१९]किमाज्ञापयसि[२०]। स्थविर उवाच[२१]। चक्षुः कुनाल अनित्यमिति कुरु। आह[२२]।

कुमार[1] चक्षुः सततं परीक्ष्यं चलात्मकं दुःखसहस्रयुक्तं ।
यत्रानुरक्ता बहवः पृथग्जनाः[2] कुर्वन्ति कर्माण्यहितावहानि[3] ।।

स च तथाऽभ्यासं करोति मनसिकारप्रयुक्तः । एकाभिरामः प्रशमारामश्च संवृत्तः[4] । स राजकुले विविक्ते स्थानेऽवस्थितस् [5]चक्षुरादीन्यायतनानि अनित्यादिभिर् आकारैः परीक्षते[6] ।

तिष्यरक्षिता च नाम्नाऽशोकस्याग्रमहिषी तं प्रदेशमभिगता । सा[7] तं कुनालमेकाकिनं दृष्ट्वा नयनानुरागेण गात्रेषु परिष्वज्य कथयति ।

[8]दृष्ट्वा तवेदं नयनाभिरामं श्रीमद् वपुर्नेत्रयुगं च कान्तं ।
दंदह्यते मे हृदयं समन्ताद् दावाग्निना प्रज्वलते च कक्षः[9] ।।

श्रुत्वा कुनाल उभाभ्यां पाणिभ्यां कर्णौ पिधाय कथयति[10] ।

वाक्यं न युक्तं तव वक्तुमेतत्
सूनोः पुरस्ताज् जननी ममासि ।
अधर्ममार्गं परिवर्जयस्व
अपायमार्गस्य स एव[11] हेतुः ।।

ततस्तिष्यरक्षिता तत्कालमलभमाना[12] क्रुद्धा कथयति ।

[13]अभिकामामभिगतां यत्त्वं नेच्छसि मामिह[14] ।
न चिरादेव दुर्बुद्धे[15] सर्वथा[16] न भविष्यसि ।।

---

advice: 'The eye is perishable. One must not set one's hopes on it. Train yourself with zeal to the practice of meditation and sapience.'"

[1]MSS. *cakṣuḥ ku°*. [2]MSS. *°nāś ca*. [1-3]Chl omits. [3-4]Chl "Thereupon he received the doctrine." [5]Chl adds: *dhyāyati*. [6]MSS. *°kṣyate*. [5-6]Chl *cakṣur duḥkhaṁ śūnyam anityam ātmā ca asatyam iti parīkṣate*. [7]MSS. *sa*. [8-9]Chl "Just as a violent fire flares up and consumes the forest of a mountain, so the passion tortures me. We must now give ourselves up to the pleasures of love." [9]MSS. *°te va kakṣam*. [10]Chl "recited the following *gāthā*:" [10-11]Chl "I close my ears, for I do not wish to hear these intemperate evil speeches. You being a mother, how could you have a feeling of lust towards your son! The criminal desire, if not suppressed, is a door to the evil ways." [11]MSS. *hi eṣa°*. [12]Chl omits. [13-14]Chl "as you refuse". [15]Chl omits. MSS. *°ddha*. [16]Chl "certainly".

कुनाल उवाच[1]।

मम भवतु मरणं मात[2] स्थितस्य धर्मे विशुद्धभावस्य[3]।
न तु जीवितेन कार्यं सज्जनजनधिक्कृतेन[4] मम ॥
[5]स्वर्गस्य धर्मलोपो यतो भवति जीवितेन किं तेन।
मम मरणहेतुना वै बुधपरिभूतेन धिक्कृतेन[6]॥

यावत् तिष्यरक्षिता कुनालस्य छिद्रान्वेषिणी अवस्थिता।

राज्ञोऽशोकस्योत्तरापथे[7] तक्षशिला नगरं विरुद्धं। श्रुत्वा च राजा[8] स्वयमेवाभिप्रस्थितः[9]। ततोऽमात्यैरभिहितः। देव[10] कुमारः[11] प्रेष्यतां।

अथ राजा कुनालमाहूय[12] कथयति। वत्स कुनाल गमिष्यसि[13] तक्षशिलानगरं[14] संनामयितुं[15]।

कुनाल उवाच। परं देव गमिष्यामि[16]।

ततो नृपस्तस्य निशाम्य भावं [17]पुत्राभिधानस्य मनोरथस्य।
स्नेहाच्च योग्यं मनसा च बुद्ध्वा आज्ञापयामास विहारयात्रां[18]॥

अथ राजाऽशोको नगरशोभां[19] मार्गशोभां च कृत्वा जीर्णातुरकृपणांश्च[20] मार्गादपनीय एकरथे[21]ऽभिरुह्य कुमारेण सह पाटलिपुत्रान् निर्गतः। अनुव्रजित्वा निवर्तमानः कुनालं कण्ठे परिष्वज्य नयनं[22] निरीक्षमाणः प्ररुदन्नुवाच[23]।

---

[1]Chl reads: "Kunāla replied by reciting the following *gāthā:*" [2]MSS. *mā tu.* [3]Chl °*bhāve.* [4]Chl *kāmavaśibhūtena.* [5]ABD add: *mama.* [5-6]Chl "He who destroys the Way of the human beings and gods is blamed by the sages. (*svargasya martasya ca dharmalopo yato bhavati jīvitena kiṁ budhadhikkṛtena*)" [7]Chl adds: *gandhārarājye.* [8]Chl adds: *tasya śāsanāya.* [9]Chl °*tum icchati.* [10-11]Chl *deva svayaṁ na gantavyaṁ, kumāreṣu kaścit.* [12]Chl *kumāraṁ kunālaṁ.* [13]Chl *śakṣyasi.* [14]Chl °*rājyaṁ.* [15]Chl *lit.* "to chastise". [16]Chl *śakṣyāmi* ("I can chastise them"). [17-18]Chl "rejoiced and wished that he should go." [18]MSS. *vihāya yā°.* [19]Chl "in the territories of the kingdom". [20]Chl adds: *śavāṁś ca bhikṣukāṁś ca.* [21]Chl describes that the chariot was "decorated with a big fan of feathers." [22]MSS. *kunālakaṇṭhe ... nirīkṣyamāṇaḥ.* [22-23]Chl *prārodit. sutaṁ ca nirikṣamāṇa uvāca.*

धन्यानि तस्य[1] चक्षूंषि चक्षुष्मन्तश्च ते जनाः ।
सततं ये कुमारस्य द्रक्ष्यन्ति मुखपङ्कजं[2] ।।

यावन् नैमित्तिको ब्राह्मणः पश्यति[3] कुमारस्य न चिरान् नयनविनाशो भविष्यति । स च राजाऽशोकस्तस्य नयनेष्वत्यर्थमनुषक्तः । दृष्ट्वा च कथयति[4] ।

नृपात्मजस्य[5] नयने विशुद्धे महीपतिश्चाप्यनुरक्तमस्य ।
श्रिया विवृद्धे हि सुखानुकूले पश्यामि नेत्रेऽद्य विनश्यमाने[6] ।।
इदं पुरं स्वर्गं[7] इव[7] प्रहृष्टं कुमारसंदर्शनजातहर्षं[8] ।
पुरं विपन्ने नयने तु तस्य भविष्यते शोकपरीतचेतः[9] ।।

अनुपूर्वेण तक्षशिलामनुप्राप्तः[10] । श्रुत्वा च तक्षशिलापौरा अर्धत्रिकाणि[11] योजनानि[11] मार्गशोभां[11] नगरशोभां च कृत्वा पूर्णकुम्भैः[12] प्रत्युद्गताः । वक्ष्यति[13] च ।

श्रुत्वा तक्षशिलापौरो[14] रत्नपूर्णघटादिकान्[15] ।
गृह्य प्रत्युज्जगामाशु बहुमान्य[16]नृपात्मजं ।।

प्रत्युद्गम्य कृताञ्जलिरुवाच । न वयं कुमारस्य विरुद्धा न राज्ञोऽशोकस्य । अपि तु दुष्टात्मानोऽमात्या आगत्यास्माकमपमानं कुर्वन्ति[17] । यावत्[18] कुनालो महता सम्मानेन[19] तक्षशिलां प्रवेशितः ।

---

[1]*teṣu ? tāni ?* [1–2]Chl *dhanyās te janā ye te cakṣuṣī drakṣyanti* (*lit. draṣṭuṁ śakṣyanti*). [2–3]Chl "Now there was a Brāhmaṇa who drew a horoscope and said..." [3]MSS. omit it. [4]MSS. °*manuśakto dṛṣṭvā*°. [4–6]Chl reads: "The king likes the eyes of his son, but they will certainly be destroyed before long." [5]MSS. °*pātmakasya*. [7]Chl omits it. MSS. °*rgam iva*. [8]Chl *kumāranayanadarśana*°. [9]MSS. *bhaviṣyati . . . cetāḥ*. Chl reads this *śloka lit.* thus: "At present there is none who does not rejoice in seeing the eyes of this young man. Later on, if they are destroyed, that would be a universal grief." [10]MSS. °*prāpte*. [11]Chl omits. [12]Chl "carrying vessels of perfumes (*gandhaghaṭaiḥ*) as a sign of submission". [13]Chl adds: "They came to meet him to a distance of half a *yojana*." [14]MSS. °*rā*. [15]MSS. °*ṭodikāṁ*. [16]MSS. °*mānyā*. The *śloka* is not found in Ch. [17]Chl "We are rebellious only to the wicked ministers who are close to the king." [18]Chl *prabhūtaprābhṛtārpitaḥ*. [19]MSS. *sanmā*°.

राजश्चाशोकस्य महान् व्याधिरुत्पन्नः। तस्य मुखादुच्चारो[1] निर्गन्तुमारब्धः। सर्वरोमकूपेभ्यश्चाशुचि[2] प्रवरति न च शक्यते चिकित्सितुं। ततो राज्ञाऽभिहितं[3]। कुनालमानयत राज्ये प्रतिष्ठापयिष्यामीति[4]। किं ममेदृशेन जीवितेन प्रयोजनं।

श्रुत्वा च तिष्यरक्षिता[5] चिन्तयति। यदि कुनालं राज्ये प्रतिष्ठापयिष्यति नास्ति मम जीवितं। तयाऽभिहितं। अहं त्वा[6] स्वस्थं करिष्यामि किं तु वैद्यानां प्रवेशः प्रतिषिध्यतां। यावद् राज्ञा वैद्यानां प्रवेशः प्रतिषिद्धः। ततस्तिष्यरक्षितया वैद्यानामभिहितं। यदि कश्चिदीदृशेन व्याधिना स्पृष्टः स्त्री वा पुरुषो वाऽगच्छति मम[7] दर्शयितव्यः[8]।

अन्यतमश्चाभीरस्तादृशेनैव व्याधिना स्पृष्टः। तस्य पत्न्या वैद्याय [9]व्याधिर्निवेदितः। वैद्येनाभिहितं। [10]स एवागच्छत्वातुरो व्याधिं दृष्ट्वा भैषज्यमुपदेक्ष्यामि[11]। यावदाभीरो[12] वैद्यसकाशमभिगतः[13]। वैद्येन च तिष्यरक्षितायाः समीपमुपनीतः। ततस्तिष्यरक्षितया प्रतिगुप्ते[14] प्रदेशे[15] जीविताद् व्यपरोपितः। जीविताद् व्यपरोप्य कुक्षिं पाटयित्वा पश्यति च तस्य पक्वाशयस्थानं[16]। अन्त्रायां[17] कृमिर्महान् प्रादुर्भूतः। स यद्यूर्ध्वं गच्छति तेनाशुचि[18] प्रवरति। अथाधो गच्छत्यधः प्रवरति[19]। यावत् तत्र मरिचान् पेषयित्वा दत्तो[20] न च [स] म्रियते। एवं पिप्पलीं[21] शृङ्गबेरं च। विस्तरेण यावत् पलाण्डुं दत्तः। स्पृष्टश्च

मृत उच्चारमार्गेण[1] निर्गतः। [2]एतच्च प्रकरणं तया राज्ञे निवेदितं। देव पलाण्डुं परिभुंक्ष्व स्वास्थ्यं भविष्यति[3]। राजाऽह। देवि[4], अहं क्षत्रियः कथं पलाण्डुं परिभक्षयामि। देव्युवाच[5]। देव, परिभोक्तव्यं जीवितस्यार्थे भैषज्यमेतत्[6]।

राज्ञा परिभुक्तं। स च कृमिर्मृत उच्चारमार्गेण निर्गतः। स्वस्थीभूतश्च राजा। तेन[7] परितुष्टेन तिष्यरक्षिता वरेण प्रवारिता[8]। किं ते वरं प्रयच्छामि। तयाऽभिहितं। सप्ताहं मम देवो राज्यं प्रयच्छतु। राजाऽह[9]। अहं को भविष्यामि। देव्युवाच। सप्ताहस्यात्ययाद् देव एव राजा भविष्यति[10]।

यावद् राज्ञा तिष्यरक्षितायाः सप्ताहं राज्यं दत्तं। तस्या बुद्धिरुत्पन्ना[11]। इदानीं मयास्य कुनालस्य वैरं निर्यातयितव्यं। तया [12]कपटलेखो लिखितस्तक्षशिलकानां पौराणां। कुनालस्य[13] नयनं विनाशयितव्यमिति। आह च[14]।

राजा ह्यशोको बलवान् प्रचण्ड आज्ञापयत्तक्षशिलाजनं हि।
उद्धार्यतां लोचनमस्य शत्रोर्मौर्यस्य वंशस्य कलङ्क एषः[15]॥

राज्ञोऽशोकस्य यत्र कार्यमाशु परिप्राप्यं भवति [स] [16]दन्तमुद्रया मुद्रयति। यावत् तिष्यरक्षिता शयितस्य राज्ञस्तं लेखं दन्तमुद्रया मुद्रयिष्यामीति राज्ञः सकाशमभिगता[17]। राजा च भीतः प्रतिबुद्धः।

---

"She used all kinds of pungent things and gave them to the worm but it was not killed."

[1]Chl "by the inferior ways". [2–3]Chl "For that reason, the queen advised the king to eat onion." [4]AB *devim*. [5–6]Chl "Tiṣya° said to the king for the second time, 'You must eat it, in order to be cured.'" [7–8]Chl reads: "He said to Tiṣya°..." [9–10]Chl omits. [11]Chl reads: "Tiṣya° having obtained his consent said to herself..." [12]Chl omits *kapaṭa*. It reads: *ittham*. MSS. *niryātitavyam. tayā*. [13–14]Chl omits. [15]Chl reads this *śloka* as: "Pluck out the eyes of Kunāla, for he has committed a great crime. Promptly pluck out his eyes. King Aśoka is very strict. Don't delay; that will be disobeying the king." [15–17]Chl "In order to have successful results, it was necessary to seal the writing with the teeth of the king, in the time of sealing it up. Tiṣya° waited till the king was asleep and wished to seal the edict." Then it reads: *rājā ca sahasā bhītaḥ*°. [16]D *bhadra*°.

देवी कथयति। किमिदमिति[1]। राजा कथयति। देवि स्वप्नं मेऽशोभनं दृष्टं। पश्यामि द्वौ गृध्रौ[2] कुनालस्य नयनमुत्पाटयितुमिच्छतः। [3]देवी कथयति। स्वास्थ्यं कुमारस्येति[4]। एवं द्विरपि राजा भीतः[5] प्रतिबुद्धः कथयति। देवि स्वप्नो मे न शोभनो दृष्ट इति। तिष्यरक्षिता कथयति। कीदृशः स्वप्न इति। राजाऽह। पश्यामि कुनालं दीर्घकेशनखश्मश्रुं[6] पौरं प्रविष्टं[7]। देव्याह। स्वास्थ्यं कुमारस्येति[8]।

यावत्[9] तिष्यरक्षितया राज्ञः शयितस्य स लेखो दन्तमुद्रया मुद्रयित्वा तक्षशिलां प्रेषितः। यावद् राज्ञा शयितेन स्वप्ने दृष्टं दन्ता विशीर्णाः[10]।

ततो राजा तस्या एव रात्रेरत्यये नैमित्तिकान् आहूय कथयति। कीदृश एषां स्वप्नानां विपाक इति। नैमित्तिकाः कथयन्ति। देव य ईदृशस्वप्नानि पश्यति [11]तस्य पुत्रस्य चक्षुर्भेदो भवति[12]। आह च।

दन्ता यस्य विशीर्यन्ते स्वप्नान्ते प्रपतन्ति च।
[13]चक्षुर्भेदं च पुत्रस्य पुत्रनाशं स पश्यति[14]॥

श्रुत्वा च राजाऽशोकस् [15]त्वरितमुत्थायासनात्[16] कृताञ्जलिश्चतुर्दिशं देवतां[17] याचयितुमारब्धः। आह च[18]।

या देवता शास्तुरभिप्रसन्ना धर्मे च सङ्घे च गणप्रधाने।
ये[18] चापि लोके ऋषयो वरिष्ठा[19] रक्षन्तु तेऽस्मत्तनयं कुनालं॥

[1]Chl *katham sahasā pratibuddho'si.* [2]Chl adds: *sutasya me.* [3-4]Chl "uttering these words he was asleep." [4]MSS. *svāstham kumā°.* [5]Chl *sahasā.* [6]MSS. *°śru.* [7]MSS. *°ṣṭaḥ.* [6-7]Chl *dīrgha-śmaśruṁ bhūmāv āsīnaṁ.* [8]Chl "Sleep peacefully; who will do harm to the prince?" MSS. *svastham kumā°.* [9-10]Chl "The king was asleep. The queen sealed the edict with the teeth of the king (See Notes). She ordered a messenger to carry the edict which prescribed to the people of Takṣaśilā to pluck out the eyes of Kunāla. The king had a dream again. He dreamt that his teeth fell off." [10]MSS. *vistīrṇāḥ.* [11-12]MSS. omit. We have adopted it from the Chl which reads: "The diviners made this prediction: 'Such a dream certainly presages that the son of the king will lose his eyes.'" [13-14]Chl omits. [15-16]Chl omits. [16-17]Chl *yā devatā buddhadharmaṁ rakṣanti tāḥ pūjayati.* [18-19]Chl omits.

स च लेखोऽनुपूर्वेण तक्षशिलामुपनीतः। [1]अथ तक्षशिलाः पौरजानपदा लेखदर्शनात् कुनालस्य गुणविस्तरतुष्टा नोत्सहन्ते तदप्रियं निवेदितुं। चिरं विचारयित्वा चण्डो राजा दुःशीलः स्वपुत्रस्य न मर्षयति प्रागेवास्माकं [किं] मर्षयति। आह च[2]।

मुनिवृत्तस्य शान्तस्य[3] सर्वभूतहितैषिणः।
[4]यस्य द्वेषः कुमारस्य कस्य नास्य भविष्यति[5]।।

तैर्यावत् कुनालस्य निवेदितं। लेखश्चोपनीतः। ततः कुनालो वाचयित्वा कथयति। विश्रब्धं यथात्मप्रयोजनं क्रियतामिति[6]। यावच् चण्डाला उपनीताः कुनालस्य नयनम् उत्पाटयतेति[7]। ते च कृताञ्जलिपुटा ऊचुः। नोत्सहयामः[8]। कुतः।

यो हि चन्द्रमसः कान्तिं मोहादभ्युद्धरेन् नरः।
स चन्द्रसदृशाद् वक्त्रात् तव नेत्रे समुद्धरेत्।।

ततः कुमारेण मकुटं दत्तम्। अनया दक्षिणयोत्पाटयत[9] इति[9]। तस्य तु कर्मणाऽवश्यं विपक्तव्यं[10]। पुरुषो हि विकृत-

---

[1-2]Chl reads: "The inhabitants of the town loved and respected the Dharma and the Saṅgha. So great was their humaneness and their generosity that there was none to show the royal order (to Kunāla). They resolved thus: 'If the king has no mercy for his son, how can he love and spare us, we who are his subjects ?' " [2-3]Chl "He wishes to succour all. He is profoundly moderate and reconciling. He has neither arrogance nor outrage." (Chl reads this as the second *pāda* of the *śloka*.) [4-5]Chl "If having such a son the king wants to destroy him, then what are *we* to him ?" [5]MSS. *kasyānyasya*°. [6]Chl reads these four sentences as: "It is but after hiding the edict for a long time that they showed it to Kunāla. He having received it gave credit to what it contained and said: 'Let it be done as you wish to do; pluck out my eyes.' But none was found to pluck them out." [7]MSS. °*yatheti*. [8]BC *notsāha*°. [7-9]Chl "The Caṇḍālas refused. They said: 'We shall better destroy our own eyes. How can we destroy eyes like these.' Thereupon, a precious crown which was worth a hundred thousand ounces of gold was taken up and given to the Caṇḍālas, on condition that they will pluck out the eyes. But the Caṇḍālas refused as before." Ch2, following the text, says that Kunāla gave the crown. [10]MSS. *karmaṇo . . . ttavyaṁ*.

एष[1] हि निर्मल[2]ज्योत्स्नो[3] गगनात् पतते शशी।
पुण्डरीकवनाच्चापि[4] श्रीमानुत्पाट्यते[5]ऽम्बुजः॥

[6]तेषु प्राणिशतसहस्रेषु रुदत्सु कुनालस्यैव नयनमुत्पाट्य हस्ते दत्तं। ततः कुनालस्तन्नयनं गृह्योवाच।

रूपाणि कस्मान्न निरीक्षसे त्वं यथा पुरा प्राकृतमांसपिण्ड[7]।
ते वञ्चितास्ते च विगर्हणीया आत्मेति ये त्वामबुधाः श्रयन्ते[8]॥
सामग्र्यकं बुर्बुदसन्निकाशं सुदुर्लभं[9] निर्विषयाऽस्वतन्त्रं[10]।
एवं प्रवीक्षन्ति[11] सदाऽप्रमत्ता ये[12] त्वां न ते दुःखमनुप्रयान्ति[13]॥
एवं [14]चिन्तयता तेन [15]सर्वभावेष्वनित्यतां।
स्रोतापत्तिफलं[16] प्राप्तं [17]जनकायस्य पश्यतः[18]॥

ततः कुनालो [19]दृष्टसत्यस्तं पुरुषमुवाच। इदानीं द्वितीयं विश्रब्धं नयनमुत्पाट्यतां। यावत्तेन पुरुषेण कुनालस्य द्वितीयं नयनमुत्पाट्य हस्ते दत्तं[20]। अथ कुनालो मांसचक्षुषि उद्धृते [21]प्रज्ञाचक्षुषि च विशुद्धे कथयति।

उद्धृतं मांसचक्षुर्मे यद्यप्येतत् सुदुर्लभं[22]।
प्रज्ञाचक्षुर्[23]विशुद्धं मे प्रतिलब्धम् अनिन्दितं[23]॥

---

[1]MSS. °*ṣā*. Chl *sahasā*. [2]MSS. °*lā*. [3]MSS. °*tsnā*. [2–3]Chl reads *lit.* "pure and luminous". [4]Chl omits this *pāda*. [5]Chl *lit.* *vinaśyati*. MSS. *śrīmann utpāṭyate'mbujaṁ*. [6–7]Chl "All the myriads and *koṭis* of people wept; and they could not overcome their grief. Thereupon, Kunāla contemplated on the eye which was in his hand and made this reflection: *dhig idaṁ nayanaṁ. rūpaṁ kathaṁ nekṣasi? ramyam āsīḥ purā 'dhunā prākṛtamāṁsapiṇḍaḥ.*" [8]Chl reads this line: *abudhā mohitās tvayā*. MSS. *tām abudhāḥ śrayante. sāmagrajaṁ*. Chl adds: "It was said that for the cause of that which is within you (eye) I excited an unruly passion. In fact, you are but the delusive product of the multitude of causes. To speak the truth, the eye exists by no means. You resemble a bubble on the surface of the water (*budbudasannikāśaṁ*)." [9–10]Chl omits. [10]MSS. *nirviṣam a°*. [11]MSS. °*viṣya*°. [12–13]Chl "They are liberated from life and death." [14]MSS. *anuvici*°. [15]Chl omits this *pāda*. [16]MSS. *śrotāphalaṁ*. [17–18]Chl "He could see the (four-fold noble) Truth." [19]Chl *vikṛtarūpaṁ*. [20]Chl adds: "Kunāla contemplated on that eye again and attained the state of *sakṛdāgāmin*." [21]Chl *lit.* *dharmacakṣus* ('eye of the Law'). [22]Chl omits this *pāda*. [23]Chl omits it.

परित्यक्तो[1] नृपतिना यद्यहं पुत्रसंज्ञया[2]।
धर्मराजस्य पुत्रत्वमुपेतोऽस्मि महात्मनः॥
ऐश्वर्याद् यद्यहं भ्रष्टः शोकदुःखनिबन्धनाद्[3]।
धर्मैश्वर्यमवाप्तं मे दुःखशोकविनाशनं॥

यावत् कुनालेन श्रुतं नायं तातस्याशोकस्य आदेशः[4]। अपि तु तिष्यरक्षिताया अयं प्रयोग[5] इति। श्रुत्वा च कुनालः कथयति।

चिरं सुखं [6]तिष्ठतु तिष्यनाम्नी आयुर्बलं[7] पालयतां च देवी।
[8]संप्रेषितोयं हि यया प्रयोगो यस्यानुभावेन कृतः स्वकार्थः[9]॥

ततः काञ्चनमालया श्रुतं कुनालस्य नयनानि उत्पाटितानीति। श्रुत्वा च भर्तृतया[10] कुनालसमीपमुपसंक्रम्य [10]पर्षदमवगाह्य[10] कुनालमुद्धृतनयनं रुधिरावसिक्तगात्रं दृष्ट्वा[11] मूर्च्छिता भूमौ पतिता। यावज् जलसेकं कृत्वा उत्थापिता।

ततः कथंचित् संज्ञामुपलभ्य सस्वरं प्ररुदती उवाच।

[12]नेत्राणि कान्तानि मनोहराणि ये मां निरीक्ष्या[13]जनयन्ति तुष्टिं।
ते मे[14] विपन्ना ह्यनिरीक्षणीया[15]स्त्यजन्ति मे प्राणसमाः शरीरं[16]॥

ततः कुनालो [17]भार्यामनुनयन्नुवाच। अलं रुदितेन। नार्हसि शोकमाश्रयितुं[18]। स्वयंकृतानामिह कर्मणां फलमुपस्थितं। आह[19] च।

कर्मात्मकं लोकमिदं विदित्वा दुःखात्मकं चापि जनं हि मत्वा[20]।
मत्वा च लोकं[21] प्रियविप्रयोगं कर्तुं[22] प्रिये नार्हसि बाष्पमोक्षं[23]॥

---

[1]MSS. °*tyakto'haṁ*. [1–2]Chl reads this: "forsaken by him who was my father in the series of transmigration". [3]Chl omits this *pāda*. [4]MSS. *karmā*. [5]Chl "forgery". [6]MSS. *caiva sā*. Chl adds: *nirudvegaṁ*. [7]Chl omits *balaṁ*. MSS. *pālayate*. [8–9]Chl "Because she has been the instrument which has destroyed the causes (of transmigration) for my sake and has made me obtain the benefit of the Law." [10]Chl omits. [11]Chl adds: "She uttered a cry of anguish and was at the height of despair." [12]MSS. *prarudantī uvāca*. [12–16]Chl "Those eyes which were guiltless and marvellously beautiful are destroyed and reduced to this state!" [13]MSS. °*rīkṣaṁ jana*°. [14]ABD *tam me*. C *ta me*. [15]MSS. °*nīyaḥ*. [16]MSS. *prāṇasamā śa*°. [17–18]Chl "replied to her by reciting this *gāthā*:" [19–20]Chl omits. [20–21]Chl *paraṁ hi śokaṁ*. [22–23]Chl *lit.* "Get rid of your affliction. What is the good of weeping?"

ततः कुनालो भार्यया सह तक्षशिलाया निष्कासितः। स गर्भाधानमुपादाय[1] परमसुकुमारशरीरः। न किञ्चिद् उत्सहते कर्म कर्तुं[2]। केवलं वीणां वादयति। गायति च। ततो[3] भैक्ष्यं लभते। कुनालः[4] पत्न्या सह भुंक्ते[5]।

[6]ततः काञ्चनमाला येन मार्गेण पाटलिपुत्रादानीता तमेव मार्गमनुसरन्ती भर्तृद्वितीया पाटलिपुत्रं गता[7]। यावदशोकस्य गृहमारब्धा प्रवेष्टुं। द्वारपालेन च निवारितौ। यावद्[8] राज्ञोऽशोकस्य यानशालायामवस्थितौ[9]।

ततः कुनालो रात्र्याः प्रत्यूषसमये वीणां वादयितुमारब्धः। यथा[10] नयनान्युत्पाटितानि सत्यदर्शनं च कृतं तदनुरूपं हितं च गीतं प्रारब्धं। आह च।

चक्षुरादीनि यः प्राज्ञः पश्यत्यायतनानि च।
ज्ञानदीपेन शुद्धेन स संसाराद् विमुच्यते॥
यदि तव भवदुःखपीडिता भवति च[11] दोषविनिश्चिता मतिः।
सुखमिह च यदीच्छसि ध्रुवं त्वरितमिहायतनानि संत्यज[12]॥

---

[1]Chl *tau dampatī ājanma.* MSS. *garbhādānam u°.* [1–2]Chl "lived happily. They had not the strength to apply themselves to toilsome occupations, such as, either to carry loads or to labour." [3]Chl adds: *jīvikāyai* ("to earn livelihood"). D *bhaiṣajyaṁ.* [4–5]Chl omits. [6–7]Chl "After a good many changes of direction they approached the town of Pāṭaliputra. Arriving at the gate of the royal palace...". [8–9]Chl "Kunāla passed the night in the stable of elephants attached to the gate (of the palace)." [9]MSS. *śayana-śālā°.* [10–12]Chl "He related, in accompaniment of the *vīṇā*, his grandeur as well as his misfortune and how he had found the Way, on account of his eyes being plucked out. Those who were near the gate, listened to him. They concentrated themselves on themselves (and saw in them) the union of attributes (*skandha*). All of them obtained escape (liberation) from the misfortune of transmigration. The king having heard the familiar voice and the sound of the *vīṇā* said: 'The sound of this *vīṇā* resembles the sound of the instrument of Kunāla. This song relates the good fortune as well as the misfortune. This is as well a song of someone who has built up his own greatness.'" [11]MSS. omit it. [12]MSS. add *sva.*

[1]तस्य गीतशब्दो राज्ञाऽशोकेन श्रुतः। श्रुत्वा च प्रीतमना उवाच।

गीतं कुनालेन मयि प्रसक्तं वीणास्वरश्चैव[2] श्रुतश्चिरेण।
अभ्यागतोऽपीह[3] गृहं नु कञ्चिन् न चेच्छति द्रष्टुमयं कुमारः॥

अथ राजाऽशोकोऽन्यतमपुरुषमाहूयोवाच। पुरुष लक्ष्यते।

न खल्वेष किं गीतस्य कुनालसदृशो ध्वनिः।
कर्मण्यधैर्यतां चैव सूचयन्निव लक्ष्यते[4]॥
तदनेनास्मि शब्देन धैर्यादाकम्पितो भृशं[5]।
कलभस्येव नष्टस्य प्रनष्टकलभः करी॥

[6]गच्छ कुनालमानयस्वेति। यावत् पुरुषो यानशालां गतः। पश्यति कुनालम् उद्धृतनयनं[7] वातातपपरिदग्धगात्रमप्रत्यभिज्ञाय च[8] राजानमशोकम् अभिगम्योवाच। देव न[9] ह्येष कुनालः[10]। अन्धक एष वनीपकः[11] पत्न्या सह देवस्य[12] यानशालायाम्[13] अवस्थितः। श्रुत्वा च राजा संविग्नश्चिन्तयामास। [14]यथा मया स्वप्नान्यशोभनानि दृष्टानि[15] नियतं कुनालस्य नयनानि विनष्टानि भविष्यन्ति[16]। आह च।

स्वप्नान्तरे निमित्तानि यथा दृष्टानि मे पुरा।
निःसंशयं कुनालस्य नेत्रे वै निधनं गते॥

ततो राजा प्ररुदन्नुवाच[17]।

शीघ्रमानीयतामेष मत्समीपं[12] वनीपकः[13]।
न हि मे शाम्यते[18] चेतः सुतव्यसनचिन्तया[19]॥

यावत् पुरुषो यानशालां गत्वा कुनालमुवाच[20]। कस्य त्वं पुत्रः। किं च नाम। कुनालः प्राह।

---

1–4Chl : *cf*. p. 117. 2MSS. °*svaraṁ caiva śruti*°. *ciraṁ śruto me?* 3ABC °*gataś ceha*. AC *gṛhaṁ na*. 5Chl *lit*. "The strength of my mind is failing me." 6–8Chl "He ordered some persons to go to see. They saw Kunāla deprived of his eye-sight, lean and sun-burnt; and (so) could not recognize him." 7MSS. °*yanavā*°. 9–10Chl omits. 10A *andhala*, BC °*dhalaka*. 11Chl adds: "lean and sun-burnt". ABC °*pagaḥ*. 12–13Chl omits. 14–17Chl "Formerly, I have seen in dream my son Kunāla with eyes lost. Is it not he?" 15MSS. *dṛṣṭvā*. 16AB °*ti*. 18D *śāsyate*. 19Chl *sutānusmaraṇān mama*. 19–20Chl "Then he sent some persons who went again to the stable of elephants and

अशोको नाम राजाऽसौ मौर्याणां[1] कुलवर्धनः[2]।
कृत्स्नेयं पृथिवी यस्य वशे वर्तति किंकर[3]॥
तस्य राज्ञस्त्वहं पुत्रः कुनाल इति विश्रुतः।
धार्मिकस्य[4] तु पुत्रोऽहं बुद्धस्य आदित्यबान्धव:[5]॥

ततः कुनालः[6] पत्न्या सह राज्ञोऽशोकस्य समीपमानीतः। अथ राजाऽशोकः [पश्यति] कुनालमुद्धृतनयनं वातातपपरिदग्धगात्रं [7]रथ्याचोडकसंघातप्रत्यवरेण वाससा लक्ष्यालक्ष्यप्रच्छादितकौपीनं[8]। स तमप्रत्यभिज्ञाय आकृतिमात्रकं दृष्ट्वा कथयति। त्वं कुनाल इति। कुनालः प्राह। एवं देव कुनालोऽस्मीति। श्रुत्वा मूर्च्छितो[9] भूमौ पतितः। [10]वक्ष्यति हि।

ततः कुनालस्य मुखं निरीक्ष्य नेत्रोद्धृतं[11] शोकपरीतचेताः।
राजा ह्यशोकः पतितो धरण्यां हा पुत्र शोकेन हि दह्यमानः[12]॥

यावज् जलपरिषेकं कृत्वा [13]राजानमुत्थापयित्वाऽसने निपादितः[14]। अथ राजा [15]कथञ्चित् संज्ञामुपलभ्य[16] कुनालमुत्सङ्गे स्थापयामास। [17]वक्ष्यति हि।

ततो मुहूर्तं नृप आश्वसित्वा कण्ठे परिष्वज्य रसाश्रुकण्ठः[13]।
मुहुः कुनालस्य मुखं प्रमृज्य बहूनि राजा विललाप तत्र॥
नेत्रे कुनालप्रतिमे विलोक्य सुतं कुनालेति पुरा बभाषे।
तदस्य नेत्रे निधनं गते ते पुत्रं [17]कुनालेति कथं च वक्ष्ये[18]॥
आह च।

कथय कथय साधुपुत्र[19] तावद्
वदनमिदं तव केन[20] चारुनेत्रं[19]।

---

[1–2]Chl *jambudvīpasya śāsakaḥ.* [3]MSS. °*karā.* [4]Chl *dharmarājasya ca.* [5]Chl omits *ādi*°. [6]Chl *andhaḥ.* [7]MSS. *rathyām coḍaka* (D *codaka*) *saṁhāta*°. [7–8]Chl reads: "skinny; the dresses in tatters". [8]Chl adds: "a man with a miserable aspect". ACD °*pīnaḥ*, B *kāpinaḥ.* MSS. *sa tam a*°; is it for *santam a*°? [9]Chl "exhausted by suffering". ABD *ākṛtimātraṁkaṁ*, C °*gātrakaṁ.* [10–12]Chl omits. [11]MSS. °*te.* [13–14]Chl *samāśvāsitaḥ.* [15–16]Chl *pariṣvajya.* [17]MSS. *putra.* [17–18]Chl *lit.* "What name is to be given to you?" [19]Chl omits. [20]MSS. omit it.

[1]तस्य गीतशब्दो राज्ञाऽशोकेन श्रुतः। श्रुत्वा च प्रीतमना उवाच।
गीतं कुनालेन मयि प्रसक्तं वीणास्वरश्चैव[2] श्रुतश्चिरेण।
अभ्यागतोऽपीह[3] गृहं नु कञ्चिन् न चेच्छति द्रष्टुमयं कुमारः॥
अथ राजाऽशोकोऽन्यतमपुरुषमाहूयोवाच। पुरुष लक्ष्यते।

न खल्वेष किं गीतस्य कुनालसदृशो ध्वनिः।
कर्मण्यधैर्यतां चैव सूचयन्निव लक्ष्यते[4]॥
तदनेनास्मि शब्देन धैर्यादाकम्पितो भृशं[5]।
कलभस्येव नष्टस्य प्रनष्टकलभः करी॥

[6]गच्छ कुनालमानयस्वेति। यावत् पुरुषो यानशालां गतः। पश्यति कुनालम् उद्धृतनयनं[7] वातातपपरिदग्धगात्रमप्रत्यभिज्ञाय च[8] राजानमशोकम् अभिगम्योवाच। देव न[9] ह्येष कुनालः[10]। अन्धक एष वनीपकः[11] पत्न्या सह देवस्य[12] यानशालायाम्[13] अवस्थितः। श्रुत्वा च राजा संविग्नश्चिन्तयामास। [14]यथा मया स्वप्नान्यशोभनानि दृष्टानि[15] नियतं कुनालस्य नयनानि विनष्टानि भविष्यन्ति[16]। आह च।

स्वप्नान्तरे निमित्तानि यथा दृष्टानि मे पुरा।
निःसंशयं कुनालस्य नेत्रे वै निधनं गते॥

ततो राजा प्ररुदन्नुवाच[17]।

शीघ्रमानीयतामेष मत्समीपं[11] वनीपकः[11]।
न हि मे शाम्यते[18] चेतः सुतव्यसनचिन्तया[19]॥

यावत् पुरुषो यानशालां गत्वा कुनालमुवाच[20]। कस्य त्वं पुत्रः। किं च नाम। कुनालः प्राह।

---

[1–4]Chl : *cf.* p. 117. [2]MSS. °*svaraṁ caiva śruti*°. *ciraṁ śruto me?* [3]ABC °*gataś ceha*. AC *gṛhaṁ na*. [5]Chl *lit.* "The strength of my mind is failing me." [6–8]Chl "He ordered some persons to go to see. They saw Kunāla deprived of his eye-sight, lean and sun-burnt; and (so) could not recognize him." [7]MSS. °*yanavā*°. [9–10]Chl omits. [10]A *andhala*, BC °*dhalaka*. [11]Chl adds: "lean and sun-burnt". ABC °*pagaḥ*. [12–13]Chl omits. [14–17]Chl "Formerly, I have seen in dream my son Kunāla with eyes lost. Is it not he?" [15]MSS. *dṛṣṭvā*. [16]AB °*ti*. [18]D *śāsyate*. [19]Chl *sutānusmaraṇān mama*. [19–20]Chl "Then he sent some persons who went again to the stable of elephants and asked the blind man..."

अशोको नाम राजाऽसौ मौर्याणां[1] कुलवर्धनः[2]।
कृत्स्नेयं पृथिवी यस्य वशे वर्तति किंकर[3]॥
तस्य राज्ञस्त्वहं पुत्रः कुनाल इति विश्रुतः।
धार्मिकस्य[4] तु पुत्रोऽहं बुद्धस्य आदित्यबान्धवः[5]॥

ततः कुनालः[6] पत्न्या सह राज्ञोऽशोकस्य समीपमानीतः। अथ राजाऽशोकः [पश्यति] कुनालमुद्धृतनयनं वातातपपरिदग्धगात्रं [7]रथ्याचोडकसंघातप्रत्यवरेण वाससा लक्ष्यालक्ष्यप्रच्छादितकौपीनं[8]। स तमप्रत्यभिज्ञाय आकृतिमात्रकं दृष्ट्वा कथयति। त्वं कुनाल इति। कुनालः प्राह। एवं देव कुनालोऽस्मीति। श्रुत्वा मूर्च्छितो[9] भूमौ पतितः। [10]वक्ष्यति हि।

ततः कुनालस्य मुखं निरीक्ष्य नेत्रोद्धृतं[11] शोकपरीतचेताः।
राजा ह्यशोकः पतितो धरण्यां हा पुत्र शोकेन हि दह्यमानः[12]॥

यावज् जलपरिषेकं कृत्वा [13]राजानमुत्थापयित्वाऽसने निषादितः[14]। अथ राजा [15]कथञ्चित् संज्ञामुपलभ्य[16] कुनालमुत्सङ्गे स्थापयामास। [17]वक्ष्यति हि।

ततो मुहूर्तं नृप आश्वसित्वा कण्ठे परिष्वज्य रसाश्रुकण्ठः[12]।
मुहुः कुनालस्य मुखं प्रमृज्य वहूनि राजा विललाप तत्र॥
नेत्रे कुनालप्रतिमे विलोक्य सुतं कुनालेति पुरा वभाषे।
तदस्य नेत्रे निधनं गते ते पुत्रं [17]कुनालेति कथं च वक्ष्ये[18]॥
आह च।

कथय कथय साधुपुत्र[19] तावद्
वदनमिदं तव केन[20] चारुनेत्रं[19]।

---

[1–2]Chl *jambudvīpasya śāsakaḥ.* [3]MSS. °*karā.* [4]Chl *dharmarājasya ca.* [5]Chl omits *ādi°.* [6]Chl *andhaḥ.* [7]MSS. *rathyāṁ coḍaka* (D *codaka*) *saṁhāta°.* [7–8]Chl reads: "skinny; the dresses in tatters". [8]Chl adds: "a man with a miserable aspect". ACD °*pīnaḥ*, B *kāpinaḥ.* MSS. *sa tam a°*; is it for *santam a°*? [9]Chl "exhausted by suffering". ABD *ākṛtimātraṁkaṁ*, C °*gātrakaṁ.* [10–12]Chl omits. [11]MSS. °*te.* [13–14]Chl *samāśvāsitaḥ.* [15–16]Chl *pariṣvajya.* [17]MSS. *putra.* [17–18]Chl *lit.* "What name is to be given to you?" [19]Chl omits. [20]MSS. omit it.

'अहमेव महाराज कृतापराधश्च सापराधश्च। विनिवर्तयामि योऽहं विनयामि विपत्तिजननानि[1]।

न शस्त्रवज्राग्निविषाणि पन्नगाः
कुर्वन्ति पीडां रभसापकारिणः[2]।
शरीरलक्ष्ये[3] हि धृते हि[4] पार्थिव
पतन्ति दुःखान्यशिवानि देहिनां[5] ॥

अथ राजा शोकाग्निना संतापितहृदय उवाच।

'केनोद्धृतानि नयनानि सुतस्य मह्यं
को जीवितं सुमधुरं त्यजितुं व्यवस्तः।
शोकानलो[7] निपतितो हृदये प्रचण्डः
आचक्ष्व पुत्र लघु कस्य हरामि दण्डं ॥

यावद् राज्ञाऽशोकेन श्रुतं तिष्यरक्षिताया अयं प्रयोग इति। श्रुत्वा[8] राजा तिष्यरक्षितामाहूयोवाच।

---

[1]Chl omits this. [2]MSS. *nabhaso'vikāriṇaḥ*. The MSS. reading is modified with the help of the Chinese reading ("hostile and cruel"). [3]MSS. *°kṣyeṇa*. [4]MSS. *dhṛtena*. [3–5]Chl reads: "These are not the ills caused by plagues that come to afflict my body. These are my past actions, the retribution of which I receive now. To make others suffer (on account of this) will be a great injustice. Every creature who has a body resembles a target which receives a multitude of arrows." [6–8]Chl "'Who is the creature devoid of love that has taken away from you the eyes while you are living!' Kunāla said, 'That is you, my father who have ordered to pluck them out.' The king said, 'If I have ordered anybody to pluck out your eyes, I shall cut off my tongue.' Kunāla said, 'My father, the edict was sealed with your teeth.' The king said, 'If I have sealed it with my teeth I shall pluck out my teeth. If my eyes have seen it, I shall pluck out my eyes.' Tiṣyarakṣitā having called the queen Padmāvatī, said to her: 'Pluck out my eyes now. I go to beg together with my son to earn my livelihood.' These words had reached the ears of the king; he reflected thus: 'Tiṣyarakṣitā has certainly caused to pluck out the eyes of my son.'" This paragraph which relates how Aśoka came to know the culprit, is not found in Ch2. [7]MSS. *°nale*.

कथं ह्यधन्ये[1] न निमज्जसे क्षितौ
[2]छेत्तास्मि शीर्षं परशुप्रहारितं[3] ।
त्यजाम्यहं त्वामतिपापकारिणीम्
अधर्मयुक्तां श्रियमात्मवानिव[4] ॥

ततो राजा क्रोधाग्निना प्रज्वलितस्तिष्यरक्षितां निरीक्ष्योवाच ।

[5]उत्पाट्य नेत्रे परिपाटयामि
गात्रं किमन्या[6] नखरैः सुतीक्ष्णैः ।
जीवन्तिशूलामथ कारयामि
छेत्तास्मि नासां[7] क्रकचेन वाऽस्याः ॥
क्षुरेण जिह्वामथ कर्तयामि[8]
विषेण पूर्णामथ घातयिष्ये ।
स [9]एवमित्यादिवधप्रयोगं
बहुप्रकारं ह्यवदन्नरेन्द्रः ॥
श्रुत्वा कुनालः [10]करुणात्मकस्तु
विज्ञापयामास गुरुं महात्मा ।
अनार्यकर्मा यदि तिष्यरक्षिता
त्वमार्यकर्मा[11] भव मा वधी[12] स्त्रियं ॥
[13]फलं हि मैत्र्या सदृशं न विद्यते
प्रभो[14] तितिक्षा सुगतेन वर्णिता[15] ।

[1]MSS. *hi dhanye.* Chl adds here: *nṛśaṁse.* [2]MSS. *chinnāmi.* [3]MSS. *prahāraiḥ.* [2–4]Chl reads: "You creature, who destroy the Law! Really I hate you. You who showed a feigned affection to my kith and kins!" [5–6]Chl "You have destroyed the eyes of my son, I am going to tear to pieces the skin of your body." [7]Chl *gātraṁ.* ABC °*sām atikacena.* D °*aticena.* [8]Chl adds: "With big blunt axe, I shall break your bones. I shall throw your body into the furnace!" MSS. *kṣareṇa jihvām ath . . . . pūrṇāmy ath . .* [9]MSS. *ityevam ādi*°. [10]MSS. *sakaru*°. [11]Chl *lit.* "Tiṣya° has taken as her principle, recourse to the evil ways and so (she has acted) thus. You must now, O king, be guided by the Holy Law." [12]MSS. *vadha.* [13–15]Chl omits. [14]MSS. °*bhos*°.

पुनः प्रणम्य[1] पितरं कुमारः
कृताञ्जलिः सूनृतवाग् जगाद ।।

राजन्न मे दुःखलवो[2]ऽस्ति कश्चित् तीव्रापकारेऽपि न मन्युतापः ।
मनः प्रसन्नं यदि मे जनन्यां ययोद्धृते मे नयने स्वयं हि ।
तत्तेन सत्येन ममास्तु तावन् नेत्रद्वयं प्राक्तनमेव सद्यः ।।

इत्युक्तमात्रे पूर्वाधिकप्रशोभिते नेत्रयुग्मे प्रादुर्बभूवतुः[3] । यावद् राज्ञाऽशोकेन तिष्यरक्षिताऽमर्षितेन [4]जतुगृहं प्रवेशयित्वा दग्धा । तक्षशिलाश्च पौराः प्रघातिताः[5] ।

भिक्षवः[6] संशयजाताः [7]सर्वसंशयच्छेत्तारमायुष्मन्तं[8] स्थविरोपगुप्तं पृच्छति । [9]किं कुनालेन कर्म कृतं यस्य कर्मणो विपाकेन[10] नयनान्युत्पाटितानि ।

स्थविर उवाच । तेन ह्यायुष्मन्तः श्रूयतां[11] ।

भूतपूर्वमतीतेऽध्वनि वाराणस्यामन्यतमो लुब्धकः । स[12] हिमवन्तं गत्वा मृगान् प्रघातयति । सोऽपरेण समयेन हिमवन्तं गतः । तत्र चाशनिपतितानि[13] पञ्चमृगशतानि एकस्यां गुहायां प्रविष्टान्यासादितानि[14] । तेन वागुरया सर्वे गृहीताः[15] । तस्य बुद्धिरुत्पन्ना । यदि

---

1AB °*ṇaśyā*. D °*namyā*. °*śca natvā* ? 2A *duḥkhalosti*. B °*khamvāsti*. C °*khanosti*. D *duḥkha—vosti*. 1–3Chl reads: "It is not proper to get angry with the children or with low and unreasonable persons." The miracle of getting the eyes back is neither found in Chl nor in Ch2. 4MSS. *jantu*°. 3–5Chl "But the king did not listen to him. A torture-hall (*lit.* a hall of glue, of...) was made and (the queen) was burnt alive. The inhabitants of the town of Takṣaśilā were equally destroyed by fire." 6Chl adds: *etat sarvaṁ jñātvā*. 7–8Chl omits. 9–10Chl *lit. kasmāt kāraṇād adhunā kuṇālasya*. 11Chl adds: "I am going to relate it to you." 12–13Chl "In summer, he lived among the people. In winter, he went to hunt in the mountain. Having approached the snowy mountains (*himavat*) he was caught by a sudden shower of hail-storm." 13C *ca śeni patitāni*. MSS. omit *pañcamṛgaśatāni*. 14Chl omits *āsāditāni*. 14–16Chl omits.

प्रघातयिष्यामि मांसः क्लेदमुपयास्यति[1]। तेन पञ्चानां मृगशतानामक्षीण्युत्पाटितानि[2]। ते उद्धृतनयना न क्वचित् पलायन्ति। एवं बहूनां मृगशतानां नयनान्युत्पाटितानि।

किं मन्यध्वमायुष्मन्तः[3]। योऽसौ लुब्धकः स एष कुनालः। यत्तदानेन बहूनां मृगशतानां नयनान्युत्पाटितानि तस्य कर्मणो विपाकेन बहूनि वर्षशतसहस्राणि नरकेषु दुःखमनुभूय ततः कर्मविशेषेण[4] पञ्चजन्मशतानि[5] तस्य नयनान्युत्पाटितानि।

[6]किं कर्म कृतं यस्य कर्मणो विपाकेनोच्चे कुले[7] उपपन्नः। प्रासादिकश्च संवृत्तः। सत्यदर्शनं च कृतं।

[8]तेन ह्यायुष्मन्तः श्रृणुत[9]।

भूतपूर्वमतीतेऽध्वनि चत्वारिंशद्वर्षसहस्रायुषि प्रजायां क्रकुच्छन्दो नाम सम्यक्सम्बुद्धो[10] लोक उदपादि।

यदा[11] क्रकुच्छन्दः सम्यक्सम्बुद्धः सकलं बुद्धकार्यं कृत्वा[12] निरुपधिशेषे निर्वाणधातौ परिनिर्वृतः, तस्याशोकेन[13] राज्ञा चतूरत्नमयः स्तूपः कारितः[14]। यदा राजाऽशोकः[15] कालगतोऽश्राद्धो[16] राजा राज्ये[17] प्रतिष्ठितः। तानि रत्नान्यदत्तादायिकैर्हृतानि[18]। पांशुकाष्ठं चावशिष्टं। [19]तत्र जनकायो गत्वा [20]विशीर्णं दृष्ट्वा शोचितुमारब्धः[21]।

[1]Ch1 adds here: "all at a time". [2]Ch1 adds: "I am going to pluck out their eyes and I shall eat a deer every day." [3–4]Ch1 "Now he has his eyes plucked out due to that (evil) act." [5–6]Ch1 "since that time till the present day". [7]Ch1 adds [illegible]. [8–9]Ch1 [illegible]. [10–11]Ch1 reads: "(Upagupta) replied:" [12]Ch1 "a Buddha". [13–14]Ch1 *lit.* "having completed the conversions which he had to do". [15–16]Ch1 "In that time, there was a king named Gracious (Ch2 "Sobha"), who, in honour of this Buddha, erected a *[illegible]* (a *stūpa* of stone decorated with seven precious substances) the site of which was a square of forty *li* obliquely." [16]MSS. *[illegible]*. [17]Ch1 "Gracious", Ch2 "Sobha". [18]Ch1 takes it as a proper name ("a king named Asrāddha"). Ch2 agrees with the text. [19]MSS. *[illegible]*. [20]Ch1 *[illegible]*. [21]MSS. *[illegible]*. [22–23]Ch1 "wept, expressed regret and anger."

तस्मिंश्च समयेऽन्यतमश्च श्रेष्ठिपुत्रः[1]। तेनोक्तः। किमर्थं रुद्यत इति। तैरभिहितं क्रकुच्छन्दस्य सम्यक्सम्बुद्धस्य स्तूपश्चतूरत्नमय[2] आसीत्। [3]स इदानीं विशीर्ण इति।

ततस्तेन या[4] तत्र क्रकुच्छन्दस्य सम्यक्सम्बुद्धस्य कायप्रमाणिका प्रतिमा बभूव विशीर्णा साभिसंस्कृता[5]। सम्यक्प्रणिधानं च कृतं। यादृशः[6] क्रकुच्छन्दः शास्तेदृशमेव शास्तारमारागयेयं। मा विरागयेयमिति।

किं मन्यध्वमायुष्मन्तः। योऽसौ श्रेष्ठिपुत्रः स एष कुनालः[7]। यत्रानेन क्रकुच्छन्दस्य[8] स्तूपोऽभिसंस्कृतस्तस्य कर्मणो विपाकेनोच्चकुले[9] उपपन्नः। यत् [10]प्रतिमाऽभिसंस्कृता[11] तस्य कर्मणो विपाकेन कुनालः[12] प्रासादिकः संवृत्तः। यत् प्रणिधानं कृतं तस्य कर्मणो विपाकेन कुनालेन [यादृशः] शाक्यमुनिः सम्यक्सम्बुद्धस्तादृश एव शास्ता समारागितो न विरागितः। सत्यदर्शनं च कृतं।

इति श्रीदिव्यावदाने[13] कुनालावदानं सप्तविंशतिमं[14] समाप्तं ॥

---

[1]Chl reads: *kulaputraḥ* ("a son of a good family"). [2]Chl *saptaratnamaya*. MSS. *stūpaṁ catū… mayam ā°*. [3–5]Chl "'Now it has been destroyed by persons who have stolen the seven precious substances and have left nothing but earth and wood (*pāṁśu-kāṣṭha*); and that is why we weep.' Then the *kulaputra* replaced the *saptaratna*, repaired the *stūpa* and decorated it as before. Besides, he made a big statue which resembled exactly the figure of Kraku° Buddha." [4]MSS. *ca*. [6–7]Chl "May I, in future, resemble this Buddha, obtain the supreme deliverance and the excellent Fruit of Purity." [8]Chl adds: *mahārghaḥ*. MSS. *stūpam abhi . . . taṁ tasya*. [9]Chl adds: *prabale kule*. [10]Chl adds: *buddha*. [11]Chl *nirmitā*. MSS. *°skṛtā tena*. [12]MSS. *°nāle*. [12–14]Chl "He has obtained the beauty at present. For having made a correct vow (*samyak praṇidhāna*) in the past, he has obtained, at present, the traces of the Way." [13]ABC omit it. [14]ABC *saptāviṁ°*. D omits it.

# अशोकावदानं

यदा राज्ञाऽशोकेन[1] भगवच्छासने श्रद्धा प्रतिलब्धा स भिक्षून्[2] उवाच। [3]केन भगवच्छासने प्रभूतं दानं दत्तं। भिक्षव ऊचुः[4]। अनाथपिण्डदेन गृहपतिना। राजाऽह। कियत्तेन भगवच्छासने दानं दत्तं। भिक्षव ऊचुः[5]। कोटिशतं तेन भगवच्छासने दानं दत्तं। श्रुत्वा च राजाऽशोकश्चिन्तयति[6]। तेन गृहपतिना भूत्वा कोटिशतं भगवच्छासने दानं दत्तं[7]। तेनाभिहितं। अहमपि कोटीशतं भगच्छासने दानं दास्यामि[8]।

तेन यावच् चतुरशीतिधर्मराजिकासहस्रं प्रतिष्ठापितं[9]। सर्वत्र[10] च शतसहस्राणि दत्तानि। जातौ बोधौ धर्मचक्रे परिनिर्वाणे च सर्वत्र शतसहस्रं दत्तं। पञ्चवार्षिकं कृतं। तत्र च चत्वारि शतसहस्राणि दत्तानि। त्रीणि शतसहस्राणि भिक्षूणां भोजितानि। यत्रैकमर्हतां द्वे शैक्षाणां[11] पृथग्जनकल्याणकानां च। कोषं स्थापयित्वा[12] महापृथिवीमन्तःपुरामात्यगणमात्मानं कुनालं चार्यसङ्घे निर्यातयित्वा [13]चत्वारि शतसहस्राणि दत्वा निष्क्रीतवान्[14]। षण्णवतिकोट्यो भगवच्छासने दानं दत्तं। स यावद् ग्लानीभूतः। अथ राजा इदानीं न भविष्यामीति विक्लवीभूतः।

तस्य राधगुप्तो नामामात्यो[15] येन सह पांशुदानं दत्तं। तदा स राजानमशोकं विक्लवीभूतमवेक्ष्य पादयो[16]र्निपत्य[16] कृताञ्जलिरुवाच।

---

[1]M8 & Div. add: *ardhāmalakadānena* which Ch omit. [2]Ch1 reads: *upaguptaṁ*. [3]Ch1 adds: "When Buddha was in this world." [4]Ch1 "Upagupta replied:" Ch1 reads "Sudatta", Ch2 "Anāthapiṇḍada". [5]Ch1 *upagupta u°*. [6]Ch1 *uvāca*. [7]Ch1 adds: *nūnaṁ yuktam eva mayā jambudvīpādhipatinā tāvad dātuṁ*. [8]Ch1 omits this sentence and the preceding one. Here Ch1 reads: *mahāpṛthivīm amātyaga . . . niryātitavān*. After this *tena yāvac catur aśīti°*. [9]Ch1 adds: "as well as the *stūpas* of the *śrāvakas*. He watered the Bodhi-tree." [10–12]Ch1 omits. [11]M8 & Div. *dvau śi°*. [12–13]Ch1: see above. [13–14]Ch1 omits. [14]M8 *niṣkrata°*. [15]Ch1 *agrāmātyo yena tasya pāṁśudānam anumoditaṁ*. [16]Ch1 omits.

यच्छत्रसङ्घैः प्रबलैः समेत्य
नोद्वीक्षितं चण्डदिवाकराभं ।
[1]पद्मानन श्रीशतसंप्रपीतं
कस्मात् सवाष्पं तव देव वक्त्रं[2] ॥

राजाऽह । राधगुप्त, नाहं द्रव्यविनाशं न राज्यनाशनं न चाश्रयवियोगं शोचामि । किन्तु शोचामि, आर्यैर्यद् विप्रयोक्ष्यामि[3] ।

नाहं पुनः सर्वगुणोपपन्नं
सङ्घं समक्षं नरदेवपूजितं ।
संपूजयिष्यामि वरान्नपानैर्
एतद्[4] विचिन्त्याश्रुविमोक्षणं मे[5] ॥

अपि च राधगुप्त, अयं मे मनोरथो वभूव, कोटीशतं भगवच्छासने दानं दास्यामीति । स[6] च मेऽभिप्रायो न परिपूर्णः[6] ।

ततो राज्ञाऽशोकेन चतस्रः[7] कोटीः[7] परिपूरयिष्यामीति[8] हिरण्य-सुवर्णं [9]कुक्कुटारामं प्रेषयितुमारब्धः[10] ।

तस्मिंश्च समये कुनालस्य संपदी[11] नाम पुत्रो युवराज्ये प्रवर्तते । तस्यामात्यैर्[12] अभिहितं । कुमार[13] अशोको राजा स्वल्पकालावस्थायी ।

---

[1-2]Chl reads: "Only 84000 concubines could look at your face. Now, when you are sick, you resemble the sun that is going to set. All the three worlds undergo changes and transformations. The sentient beings are bound to suffer and die. Let Your Majesty meditate on impermanence. What is the use of getting afflicted ?" Div. A *padmānana . . . samprayogaṁ.* [3]M8 & Div. °*yukṣyāmi.* [4]M8 & Div. *etaṁ.* [5]Chl omits this *śloka.* [6]Chl "'I could give 96 crores; four crores are still wanting and so I grieve.' Rādhagupta said, 'Your treasures are numerous. The total sum must be given.'" [7]M8 & Div. *catvāraḥ koṭyaḥ.* [7-8]Chl omits. [9]M8 & Div. (except D) *kur*°. [10]M8 °*bdhā.* [11]Chinese translations transliterate the name in different ways. *Vide* Notes. Div.A *sampadi.* [12]Chl "the wicked ministers with perverse views (*mithyā-dṛṣṭi*)". [13]Chl reads these sentences with more details: "'King Aśoka approaches the end of his life. He squanders away his treasures; having given away all, he is about to be ruined. You will be the king. The treasures and the precious things are the resources of a king. That they may not be completely squandered away, you must now put a stop to it.' Eul-

इदं च द्रव्यं कुक्कुटारामं[1] प्रेष्यते। कोशवलिनश्च राजानः। निवारयितव्यः।

यावत्कुमारेण भाण्डागारिकः प्रतिषिद्धः। यदा राज्ञोऽशोकस्याप्रतिषिद्धा [सम्पत्] तस्य सुवर्णभाजने आहारमुपनाम्यते। भुक्त्वा तानि सुवर्णभाजनानि कुक्कुटारामं[1] प्रेषयति।

तस्य सुवर्णभाजनं प्रतिषिद्धं। रूप्यभाजने आहारमुपनाम्यते। तान्यपि कुक्कुटारामं[2] प्रेषयति। ततो रूप्यभाजनमपि प्रतिषिद्धं[3]। तस्य यावत् मृद्भाजन आहारमुपनाम्यते।

तस्मिंश्च समये राज्ञोऽशोकस्यार्धामलकं करान्तरगतं[4]। अथ राजाऽशोकः संविग्नः[5] अमात्यान् पौरांश्च[6] संनिपात्य कथयति। कः साम्प्रतं पृथिव्यामीश्वरः।

ततोऽमात्या[6] उत्थायासनाद् येन राजाऽशोकस्तेनाञ्जलिं प्रणम्य ऊचुः[7]। देवः पृथिव्यामीश्वरः। अथ राजा अशोकः[8] साश्रुदुर्दिननयनवदनोऽमात्यान्[9] उवाच।

दाक्षिण्यादनृतं हि किं कथयथ[10] भ्रष्टाधिराज्या वयं
शेषं त्वामलकार्धमित्यवसितं यत्र प्रभुत्वं मम।
ऐश्वर्यं[11] धिगनार्यमुद्धतनदीतोयप्रवेशोपमं[12]
मर्त्येन्द्रस्य ममापि यत् प्रतिभयं दारिद्र्यमभ्यागतं[13] ॥

---

mo-t'i (Sampadi) in accordance with the ministers took advantage of the illness and took away all that belonged to the king. He was given only one gold plate and one silver plate in which the royal repast was served."

[1]Div. AB & M8 *kurku°*. [2]Div. *kurku°*. [3]Chl omits this sentence. M8 & Div. add: *yāval lohabhājana āhāram upanāmyate. tāny api rājā'śokaḥ kurkuṭārāmaṁ preṣayati.* [4]Div. D omits *ardha*. A *kalātaragatam*, BD *kalabhagatam*. Chl "Finally the king was given the half of an *āmalaka* fruit. Having received the fruit...". [5]Chl omits. M8 *°mātyam.* [6]M8 & Div. *°tya.* [6–7]Chl simply *amātyā ūcuḥ.* [7]M8 & Div. *uvāca.* [8–9]Chl omits. [10]Chl "You are in error when you say that I am the master." M8 *°yata.* [11–12]Chl "Oh! The riches are utterly contemptible!" [13]Chl adds after this: "'I possess nothing but the half of an *āmalaka* fruit. (I am) like a violent stream which stops when it strikes a rock.' Then he recited the following *gāthās*:"

अथवा को भगवतो वाक्यमन्यथा करिष्यति। सम्पत्तयो हि सर्वा विपत्तिनिदाना[1] इति प्रतिज्ञातं यदवितथवादिना गौतमेन न[2] हि तद् विसंवदति। प्रतिशिष्यतेऽस्मन्नचिराज्ञा मम यावतिथा[3] मनसा साऽद्य महाद्रिशिलातले विहतावन् नदी प्रतिनिवृत्ता[4]।

आज्ञाप्य व्यवधूतडिम्बडमराम्[5] एकातपत्रां महीं
उत्पाटच्य प्रतिगर्वितानरिगणान् आश्वास्य दीनातुरान्।
भ्रष्टाऽस्थाऽयतनो[6] न भाति कृपणः संप्रत्यशोको नृपश्[7]
[8]छिन्नम्लानविशीर्णपत्रकुसुमः शुष्यत्यशोको यथा[9] ॥

ततो[10] राजाऽशोकः समीपगतं पुरुषमाहूयोवाच। [11]भद्रमुख पूर्वगुणानुरागाद् भ्रष्टैश्वर्यस्यापि मम इमं तावद् अपश्चिमं व्यापारं कुरु[12]। इदं ममार्धामलकं ग्रहाय [13]कुक्कुटारामं गत्वा सङ्घे निर्यातय। मद्वचनाच्च सङ्घस्य पादाभिवन्दनं कृत्वा वक्तव्यं[14]।

जम्बुद्वीपैश्वर्यस्य राज्ञ एष साम्प्रतं विभव इति। इदं[15] तावद् अपश्चिमं दानं तथा परिभोक्तव्यं यथा मे सङ्घगता दक्षिणा विस्तीर्णा स्यादिति। आह च[16]।

---

[1]Div. & M8 °*dhanā*. [2]M8 omits *na*. [3]Div. & M8 *yāvati yathā*. Div. BD *manasā sā dyai*. M8 °*dya*. Div. A *manasā dyai*. Div. BD *śilātala*. A °*tale*. Div. *vihita*°. M8 *vihivanna*°. [4]Ch1 "The speeches of Buddha are veridical. In his speeches there is nothing which is not correct. He said: 'Those who love have the pangs of separation.' Formerly I gave orders and none could obstruct them. Today I am like a (spring of) rushing water that strikes a rock and stops flowing. Actually, in the same way, my orders are disobeyed." Div. °*nirvṛ*°. [5]Ch1 omits this adjective. Div. AB °*vyavadhṛta*°. [6]M8 & Div. °*ṣṭāchāya*°. [6–7]Ch1 "Today my power is gone. I am like a broken chariot which itself has no longer any planks for support." [8]Div. °*chinnā*°. [9]Ch1 adds: "I have lost all supports. My edict is a dead letter." [10]Div. *tato . . . . samīpaṁ gataṁ*. [11]Ch2 has mistaken this for a proper name. [10–11]Ch1 "Having recited these *gāthās* he called a dignitary attending him, gave him the *āmalaka* and the following order:" [11–12]Ch1 omits. [13]M8 & Div. *kurku*° (D *kukku*°). [14]Ch1 reads this sentence simply: "You shall speak to the Sthavira." [15–16]Ch1 omits.

इदं प्रदानं चरमं ममाद्य
राज्यं च तच्चैव[1] गतं स्वभावं ।
[2]आरोग्यवैद्योषधिवर्जितस्य
त्राता न मेऽस्त्यार्यगणाद् बहिर्धा ।।
तत्तथा भुज्यतां येन प्रदानं मम पश्चिमं ।
यथा सङ्घगता मेऽद्य विस्तीर्णा दक्षिणा भवेत् ।।

एवं देवेति स पुरुषो राज्ञोऽशोकस्य प्रतिश्रुत्य तदर्धामलकं गृह्य कुक्कुटारामं गत्वा वृद्धान्ते स्थित्वा कृताञ्जलिस्तदर्धामलकं सङ्घे निर्यातयन्नुवाच[3] ।

एकच्छत्रसमुच्छ्रयां वसुमतीमाज्ञापयन् यः पुरा
[4]लोकं तापयति स्म मध्यदिवसप्राप्तो दिवा भास्करः[5] ।
[6]भाग्यच्छिद्रमवेक्ष्य सोऽद्य नृपतिः स्वैः कर्मभिर्वञ्चितः
संप्राप्ते दिवसक्षये रविरिव भ्रष्टप्रभावः स्थितः ।।

भक्त्यावनतेन शिरसा प्रणम्य सङ्घाय तेन खलु दत्तमिदमामलकस्यार्धं [7]लक्ष्मीचापल्यचिह्नितं । ततः[8] सङ्घस्थविरो भिक्षूनुवाच । [9]भदन्ता भवद्भिः शक्यमिदानीं संवेगमुत्पादयितुं । कुतः । एवं ह्युक्तं भगवता—परविपत्तिः संवेजनीयं स्थानमिति । कस्येदानीं सहृदयस्य संवेगो नोत्पाद्यते । कुतः[10] ।

---

[1]M8 & Div. *taṁ*. M8 omits *rājyaṁ*. [2–3]Chl reads: "'May the Saṅgha receive with compassion the last alm of the unfortunate one, as I am, so that I may acquire merits.' Thereupon the Sthavira Yaśas addressed the Saṅgha, the following: 'You have all seen king Aśoka enjoying good fortune and pleasures.'" [4–5]Chl "Today he is governed by the throng of his subjects. They have robbed him of his royal wealth in such a way that he has none of them at his disposal. There is nothing else than this half of an *āmalaka* fruit which he can dispose of, at his will. With a grave and aggrieved mind, he comes to offer this to the religious ones." [6–8]Chl omits. [7]M8 & Div. BD *lakṣmyā cāpāly°*, Div. A *°kṣyānāpālya°*. [9]Div. & M8 *bhavantaḥ* for *bhavadbhiḥ*. [9–10]Chl puts this passage after *yūṣe prakṣipya saṅghe cāritaṁ* and reads it as follows: "It suits now for this reason to express a bitter distaste and a profound aversion for transmigration! Treasures and

[1]त्यागशूरो नरेन्द्रोऽसौ अशोको मौर्यकुञ्जरः।
जम्बुद्वीपेश्वरो भूत्वा जातोऽर्धामलकेश्वरः॥
भृत्यैः स भूमिपतिरद्य हृताधिकारो
दानं प्रयच्छति किलामलकार्धमेतत्।
श्रीभोगविस्तरमदैरतिगर्वितानां
प्रत्यादिशन्निव मनांसि पृथग्जनानां[1]॥

यावद् तदर्धामलकं चूर्णयित्वा यूषे प्रक्षिप्य[2] सङ्घे चारितं।

[3]ततो राजाऽशोको राधगुप्तमुवाच[4]। कथय राधगुप्त कः साम्प्रतं पृथिव्यामीश्वरः।

अथ राधगुप्तोऽशोकस्य[5] पादयोर्निपत्य कृताञ्जलिर्[6] उवाच। देवः पृथिव्यामीश्वरः।

अथ राजाऽशोकः कथंचिदुत्थाय चतुर्दिशमवलोक्य[7] सङ्घायाञ्जलिं कृत्वोवाच।

एष इदानीं महत् कोशं स्थापयित्वा इमां समुद्रपर्यन्तां महापृथिवीं भगवच्छ्रावकसङ्घे निर्यातयामि।

आह च।

इमां समुद्रोत्तमनीलकञ्चुका-
मनेकरत्नाकरभूषिताननां।
ददाम्यहं भूतधरां[8] समन्दरां
सङ्घाय तस्मै ह्युपभुज्यतां फलं[9]॥

---

pleasures vanish quickly! Power and sovereignty are soon lost. Fie! The transmigration well deserves aversion and disgust."
[1]Ch1 omits. [2]Ch1 "Then the Sthavira gave order to the man-in-charge to grate (the fruit) in the soup, so that all the monks may participate in the offering." M8 & Div. ABD *yūthe*. A *prakṣipta*. [3]Before this, Ch1 adds an obscure passage (See Notes) which is neither found in the M8 nor Div. nor in Ch2. [3-4]Ch1 "When king Aśoka approached the end of his life, he asked Rādha°..." [5-6]Ch1 omits. [7]M8 & Div. AB *avasākya*. [8]Div. A *satadharām*, D *sūdharām*, M8 *bhūdharām*. [9]Div. & M8 *tasminn upabhujyate*. Ch1 omits this *śloka*.

अपि च।

दानेनाहमनेन नेन्द्रभवनं न ब्रह्मलोके फलं
काङ्क्षामि द्रुतवारिवेगचपलां प्रागेव राजश्रियं।
दानस्यास्य फलं तु भक्तिमहितं[1] यन्मेऽस्ति तेनाप्नुयां
चित्तैश्वर्यमहार्यमार्यमहितं[2] नायाति यद् विक्रियां[3]॥

यावत् पत्राभिलिखितं कृत्वा दन्तमुद्रया मुद्रितं[4]। ततो राजा महापृथिवीं सङ्घे दत्त्वा कालगतः। यावदमात्यैर्नीलपीताभिः शिविकाभिर्निर्हरित्वा[5] शरीरपूजां कृत्वा ध्मापयित्वा[6] राजानं प्रतिष्ठापयिष्याम इति [उक्तम्][7]। यावद् राधगुप्तेनाभिहितं। राज्ञाऽशोकेन महापृथिवी सङ्घे निर्यातिता इति। ततोऽमात्यैरभिहितं। किमर्थमिति।

राधगुप्त उवाच। एष राज्ञोऽशोकस्य मनोरथो बभूव[8] कोटीशतं भगवच्छासने दानं दास्यामीति। तेन षण्णवतिकोट्यो[9] दत्ताः। यावद् आज्ञा प्रतिषिद्धा[10]। तदभिप्रायेण राज्ञा महापृथिवी सङ्घे दत्ता।

यावदमात्यैश्चतस्रः कोटीर्[11] भगवच्छासने दत्त्वा पृथिवीं निष्क्रीय संपदी राज्ये प्रतिष्ठापितः।

---

[1]Div. & M8 °*mahato*. Ch1 reads this *śloka* as follows: "But I wish that in future, wherever I may be born, I attain the sovereignty over my own self, and realize promptly the Holy Fruit." [2]M8 omits *ārya*. [3]M8 °*yā*. [4]M8 & Div. *dattaṁ mu°*. Ch1 "sealed it with his teeth." Ch1 adds: "and gave it to minister Rādhagupta." According to Ch2, the document was written on a palm-leaf (*to lo=tāla*). [5]Div. AB only *ratvā*. [6]M8 & Div. omit it. [7]Ch1 reads this passage as: "The ministers in accordance with the established law of the Cakravartin king, decorated him with all sorts of decorations, paid him homage and cremated him. Sampadī was crowned king." Ch2 reads: "Having decorated a litter with multi-coloured silk they paid homage to the body of the king." Div. A *tāvadādhumrastenābhihitam* (for *yāvad rādha°*), B *—nābhi°*. [8]Ch1 adds: "like the householder Sudatta". [9]Div. A *ṣannavāt*, B *ṣaṇṇuvyanta*. [10]M8 & Div. *rājñā prati°*. Ch1 reads this and the following sentence thus: "The desire of the deceased king should be fulfilled by redeeming Jambudvipa with four crores." [11]M8 & Div. °*tyo*.

संपदिनो बृहस्पतिः[1] पुत्रो बृहस्पतेर्वृषसेनो[2] वृषसेनस्य[2] पुष्यधर्मा[3] पुष्यधर्मणः[3] पुष्यमित्रः। सोऽमात्यानामन्त्रयते। क उपायः स्याद् यदस्माकं नाम चिरं तिष्ठेद्।

तैरभिहितं[4]। देवस्य च वंशाद् अशोको नाम्ना राजा बभूवेति। तेन चतुरशीतिधर्मराजिकासहस्रं प्रतिष्ठापितं[5]। यावद् भगवच्छासनं प्राप्यते तावत् तस्य यशः स्थास्यति। देवोऽपि चतुरशीतिधर्मराजिकासहस्रं प्रतिष्ठापयतु[6]।

राजाऽह। महेशाख्यो राजाऽशोको बभूव[7]। अन्यः कश्चिदुपाय इति। तस्य ब्राह्मणपुरोहितः पृथग्जनोऽश्राद्धः[8]। तेनाभिहितं। देव, द्वाभ्यां कारणाभ्यां नाम चिरं स्थास्यति। [9]राज्ञाशोकेन चतुरशीतिधर्मराजिकासहस्रं स्थापितमतस्तस्य नाम चिरं तिष्ठति। भवांश्चेत् तानि नाशयेद् भवतो नाम चिरतरं स्थास्यतीति[10]।

यावद् राजा पुष्यमित्र[11]श्चतुरङ्गबलकायं संनाहयित्वा भगवच्-[12]छासनं विनाशयिष्यामीति[13] कुक्कुटारामं निर्गतः[14]। द्वारे च सिंहनादो मुक्तः। यावत् स राजा भीतः पाटलिपुत्रं[15] प्रविष्टः[15]। एवं द्विरपि त्रिरपि[16]। यावद् भिक्षूंश्च सङ्घमाहूय कथयति। भगवच्छासनं नाशयिष्यामीति। किम् इच्छथ स्तूपं सङ्घारामान् वा[17]। स्तूपाः[18] भिक्षुभिः

---

[1]Div. *sampader vṛ°*. M8 *°pade vṛ°*. Ch1 reads: "Gṛha(pa)ti." Ch2: "Vṛha°." [2]M8 omits *vṛṣasen°*. Ch1 omits. Ch2 reads: "Vṛṣa°." [3]Ch1 "Puṣya(var)man." [4]Ch1 "One of them replied:" [5]Ch1 adds: "and gave donation of one hundred crores of gold." [6]Ch1 adds: "and your name will last in this world for a long time." [7]Ch1 "My predecessor was quite powerful for realizing such things. But how can I perform similar deeds?" [8]Ch1 "There was one adviser with perverse views (*mithyādṛṣṭi*)." M8 *tasya brāhmaṇaḥ purohitaḥ*. [9–10]These sentences are wanting in Sanskrit. They are adopted from Ch. [11]Div. D & M8 *°mitra catu°*. [12–13]Ch1 omits. [13]M8 *kurku°*. [14]Ch1 adds: "to burst open the doors of the monastery". [15]Ch1 "He did not dare to enter into the monastery and returned." [16]Ch1 "Thrice he reappeared thus but could not enter." [17]Ch1 adds: *rakṣituṁ*. M8 *°rāmāṁ vā*. [18]Adopted from Chinese. M8 & Div. omit.

